***प्रदिवा*** दिवु क्रीडादिषु (दि.१) । खेलना आदि । प्र दिव्+कनि, पूर्ववत् प्रदिवा । दिवस । प्रतिपूर्वक–प्रतिदिवा (बं.सं.) । द्यूतकर ।

***युवा*** यु मिश्रणे (अ.८६) । मिश्रित करना, मिलाना, जोड़ना । यौति । यु+कनि, वान्तादेश, उपधादीर्घादि पूर्ववत्, युवा । तरुण । युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि (मेदिनी.नान्त.११) ।

## ६२. नञि जहातेः ।२–४।

नञि उपपदे जहातेर्धातोः कनिप्रत्ययो भवति । 'ओ हाक् त्यागे' रविं न जहातीति *अहः* दिनम् । नस्य तत्पुरुषे लोपः (लोप्यः) ।

'नञ्' के उपपद में रहने पर हा धातु से कनि प्रत्यय होता है ।

*अहः* ओ हाक् त्यागे (अ.७१) । रविं न जहाति (जो सूर्य को नहीं छोड़ता है) । नञ् (पूर्वक) हा+कनि, 'नस्य तत्पुरुषे लोप्यः' (कात.२/५/२२) इस सूत्र से नञ् घटक नकार का लोप, धातुघटक आकार का लोप, विभक्तिकार्य, अहः । दिन ।

## ६३. पूषादयः ।२–५।

पूषन् अर्यमन् मज्जन् उक्षन् श्वन् प्लीहन् मातरिश्वन् क्लेदन्[1] स्नेहन् मूर्धन् यूषन्(दोषन्) एते कन्यन्ता निपात्यन्ते । 'पुष पुष्टौ' पुष्णाति वर्धते *पूषा* आदित्यः । 'ऋ गतौ' इयर्तीति *अर्यमा* आदित्यः । 'टु मस्जो' मज्जतीति *मज्जा* अस्थिसारः[2] । 'उक्ष सेचने' मूत्रेण उक्षति भुवं सिञ्चति इति *उक्षा* बलीवर्दः । 'टु ओ श्वि' चौरादीन् श्वयति गच्छतीति

---

1. बं.सं. एवं ति.अनु. में क्लेदन्–स्नेहन्–मूर्धन् ये तीनों उदाहरण अनुपलब्ध हैं ।
2. अस्थिनिवासः ति.अनु. ।

*श्वा* कुक्कुरः । 'अहि प्लिहि (प्लिह) गतौ' प्लीहते (प्लेहते) *प्लीहा* व्याधिविशेषः । 'टु ओ श्वि' मातरि पूर्वः । मातरि श्वयति रेतो वर्धते *मातरिश्वा* वायुः । 'क्लिदू आर्द्रभावे' क्लिद्यते *क्लेदा* चन्द्रः । 'ष्णिह प्रीतौ' स्निह्यतीति *स्नेहा* मित्रम् । 'मूर्च्छा मोहसमुच्छ्राययोः' मूर्च्छन्त्यत्राहताः प्राणिनो *मूर्धा* मस्तकम् । 'यूष हिंसार्थः' यूषतीति यूषन्[1] (*यूषा*) 'यूष्णो धान्यरसान् पश्य' । दुष्यतीति दोषन्[2] (*दोषा*) 'दोष्णो बाहू पश्य' अनयोश्च 'न शसादौ' इति प्रयोगोऽभिधानम् ।

पूषन्, अर्यमन्, मज्जन्, उक्षन्, श्वन्, प्लीहन्, मातरिश्वन्, क्लेदन्, स्नेहन्, मूर्धन्, यूषन्, दोषन् ये सभी कनि प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*पूषा* पुष पुष्टौ (क्री.४८) । पुष्ट करना, समर्थन करना । पुष्णाति । पुष्+कनि, (क्–इ अनुबन्धों का अप्रयोग) लिङ्गसंज्ञा, सि, नान्तत्वात् उपधादीर्घ, सिलोप, न् लोप, पूषा । आदित्य । सूर्य ।

*अर्यमा* ऋ गतौ (अ.४) । इयर्ति । ऋ+कनि, धातु को निपातन से गुण, तथा यम्, उपधादीर्घ, विभक्तिकार्य, अर्यमा । आदित्य । अर्यमा तु पुमान् सूर्य्ये पितृदेवान्तरेऽपि च (मेदिनी.नान्त.६४) ।

अर्य (पूर्वक) मा+कनिन्, आकार लोप, अर्यमा (वै.सि.कौ.उ.सू. १–१५७) ।

*मज्जा* 'टु मस्जो शुद्धौ' (तु.५१) । शुद्ध होना । मज्जति (अस्थिषु) । मस्ज्+कनि, स् को ज्, मज्ज् अन्= 'मज्जन्' उपधादीर्घ, विभक्तिकार्य, मज्जा । अस्थिसार ।

---

1. यूषन् म.सं. । 'यूषन्' के स्थान पर 'यूषा' पाठ अपेक्षित है । यूष्+कनि, ='यूषन्' उपधादीर्घ आदि से 'यूषा' निष्पन्न होगा ।
2. दोषन् म.सं. । दुष्+कनि, उपधादीर्घादि से 'दोषा' होता है । अतः उदाहरण में 'दोषा' पाठ वृत्ति में होना चाहिए ।

*उक्षा* उक्ष सेचने (भू.२२६) । सींचना । मूत्रेण उक्षति भुवं सिञ्चति (जो मूत्र से भूमि को सींचता है) उक्ष्+कनि, 'उक्षन्' उपधादीर्घ, विभक्तिकार्य, उक्षा । बलीवर्द (बैल) ।

*श्वा* 'टु ओ श्वि गतिवृद्ध्योः' (भू.६१६) । जाना, बढ़ना । चौरादीन् श्वयति । (जो चोरों की ओर जाता है) । श्वि+कनि इकार लोप उपधादीर्घ, विभक्तिकार्य, श्वा । कुक्कुर (कुत्ता) ।

*प्लीहा* प्लिह गतौ (भू.४४८) । प्लेहते । प्लिह्+कनि, इकार को दीर्घ, उपधादीर्घ, विभक्तिकार्य, प्लीहा । व्याधिविशेष । कुक्षिव्याधि । गुल्मरोग (हृदय की बायीं कांख में होने वाला अतिरिक्त मांसपिण्डविशेष) तिल्ली । (अ.को.२/६/६६)

*मातरिश्वा* टु ओ श्वि गतिवृद्ध्योः (भ.६१६) । मातरि श्वयति रेतो वर्धते (अन्तरिक्ष में जिसकी शक्ति वढ़ती है) । मातरि पूर्वक श्वि्+कनि, इकारलोप सप्तमी विभक्ति का अलुक्, विभक्तिकार्य, मातरिश्वा । वायु ।

*क्लेदा* क्लिदू आर्द्रभावे (दि.७६) । गीला होना, भीगना । क्लिद्यते । क्लिद्+कनि, धातु को निपातन से गुणादेश, उपधादीर्घ, लिङ्गसंज्ञा सि, सिलोप, न् लोप, क्लेदा । चन्द्र । क्रोध ।

*स्नेहा* ष्णिह प्रीतौ (दि.४०) । प्रीति करना, स्नेह करना । 'ष्णिह्' में ष् को धात्वादेः षः सः (कात.३/८/२४) सूत्र से स् तथा णो नः (कात.३/८/२५) सूत्र से ण् को न् । स्निह्यति । स्निह्+कनि, गुणादेश, पूर्ववत् स्नेहा । मित्र । व्याधि । चन्द्र ।

*मूर्धा* मुर्च्छा (मूर्च्छा) मोहसमुच्छ्राययोः (भू.५८) । मोह=मोहित होना, समुच्छ्राय=बढ़ना । मूर्च्छन्ति अत्राहताः प्राणिनः (जिस पर चोट लगने से

प्राणी मूर्च्छित हो जाते हैं) मूर्च्छ(या) मुर्च्छ्+कनि, निपातन से धातु को धकारान्तादेश, उपधादीर्घ, सिलोप, न् लोप, मूर्धा । मस्तक । शिर ।

मुह्यन्त्यस्मिन्नाहते मूर्धा, मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च (वै.सि.कौ.उ.सू.१–१५७) ।

*यूषा* यूष हिंसार्थः । यूषति । यूष्+कनि, =यूषन्, उपधादीर्घ, विभक्तिकार्य, यूषा । धान्यरस, मांड । यूषन् शब्द के प्रथमा एकवचन से लेकर द्वितीया द्विवचन तक रूप नहीं होते । द्वि० बहु–यूष्णः । 'यूष्णः=धान्यरसान् पश्य' ।

*दोषा* दुष वैकृत्ये (दि.२८) । दुष्यति । 'दुष्+कन्, निपातन से गुण, उपधादीर्घ, विभक्तिकार्य, दोषा । भुजा । द्वि.बहु.–'दोष्णः=बाहू पश्य' (बाहुओं को देखो) ।

'अनयोश्च न शसादौ' इति प्रयोगोऽभिधानम्(?) वृत्ति में यह अपूर्ण पाठ उट्टङ्कित है । इसकी पूर्ति 'हृन्मासदोषपूषां शसादौ स्वरे वा' (कात.रूप.सू.२९४) इस सूत्र से की जा सकती है ।

६४. हृकृञ्भ्यामेणुः[1] ।२–६।

आभ्यामेणुप्रत्ययो भवति । 'हृञ् हरणे' हरति मनः हरेणुः गन्धद्रव्यम् । 'डु कृञ् करणे' करोति कार्यं करेणुः हस्ती हस्तिनी वा ।

हृ तथा कृ धातु से एणु प्रत्यय होता है ।

*हरेणुः* हृञ् हरणे (भू.५९६) । हरण करना । हरति मनः । हृ+एणु, ऋ को अर् गुण, विभक्तिकार्य, हरेणुः । गन्धद्रव्य । कलाय ।

1. पाठा०– कृहृञ्भ्यामेणुः (बं.सं.), (दया.उ.को.–२–१) ।

रेणुका । (अ.को.२/९/१६) । हरेणुर्ना सतीने स्त्री रेणुकाकुलयोषितोः (मेदिनी.णान्त–८६) ।

*करेणुः* डु कृञ् करणे (त.७) । करोति कार्यम् । कृ+एणु, ऋ को अर्, विभक्तिकार्य, करेणुः । हस्ती । हाथी । हथिनी । कर्णिकार वृक्ष । पालकाप्य की माता । करेणुर्गजहस्तिन्योः कर्णिकारतरावपि (अने.सं.श्लो.२०५) ।

## ६५. दाभारिवृञ्भ्यो नुः ।२–७।

एभ्यो नुप्रत्ययो भवति । 'डु दाञ् दाने' ददातीति *दानुः* दाता । 'भा दीप्तौ' भातीति *भानुः* सूर्यः । 'रि गतौ' रियते[1] *रेणुः* धूलिः । 'वृञ् वरणे' वृणोतीति *वर्णुः* नादविशेषः ।

दा, भा, रि, वृञ् इन धातुओं से 'नु' प्रत्यय होता है ।

*दानुः* डु दाञ् दाने (अ.८४) । देना, दान देना । ददाति । दा+नु, विभक्तिकार्य, दानुः । दाता । दानुः दातरि विक्रान्ते (मेदिनी.नान्त.१०) ।

*भानुः* भा दीप्तौ (अ.१५) । चमकना, द्योतित होना । भाति । भा+नु, विभक्तिकार्य, भानुः । सूर्य । किरण ।

*रेणुः* रि गतौ (तु.१५) । रियति । रि+नु, गुण, न् को ण्, विभक्तिकार्य, रेणुः । धूलि । रेणुः स्त्रीपुंसयोर्धूलौ पुंल्लिङ्गः पर्पटे पुनः (मेदिनी.णान्त.२५) ।

---

1. रियते, म.सं. । रि धातु के परस्मैपदी होने से 'रियति' पाठ होना चाहिए । रिपि ऋषी गतौ (तु–१५) ।

*वर्णुः* वृञ् वरणे (सु.८) । वरण करना, पसन्द करना । वृणोति । वृ+नु, अर् गुण, न् को ण्, वर्णुः । नादविशेष । आदित्य । नदी । शरीर । वर्णुर्नददेशभेदयोः (वै.सि.कौ.उ.सू.३-३८) ।

## ६६. सूविषिभ्यां यण्वत् (२-८)

आभ्यां नुप्रत्ययो भवति । स च यण्वत् तेनागुणत्वम् । 'षूङ् प्राणिगर्भविमोचने' सूयते *सूनुः* पुत्रः । 'विष्लृ व्याप्तौ' वेवेष्टि व्याप्नोतीति *विष्णुः* हरिः ।

सू तथा विष् इन दोनों धातुओं से नु प्रत्यय होता है । नु को यण्वद्भाव भी होता है । यण्वद्भाव का प्रयोजन धातु को गुण का निषेध है ।

*सूनुः* षूङ् प्राणिगर्भविमोचने' (अ.५४) । गर्भ पृथक् करना, उत्पन्न होना । सूयते । धात्वादेः षः सः से ष् को स् । सू+नु, नु को यण्वद् भाव होने से धातुघटक उकार को गुण का निषेध, विभक्तिकार्य, सूनुः । पुत्र । सूर्य । सूनुः पुत्रेऽनुजे रवौ (वै.सि.कौ.उ.सू.३-३५) ।

*विष्णुः* विष्लृ व्याप्तौ (अ.८३) । व्याप्त रहना । वेवेष्टि व्याप्नोति (विश्वम्) । विष्+नु, नु को यण्वद्भाव होने से गुणनिषेध, न् को ण्, विभक्तिकार्य, विष्णुः । हरि । जित्वरे चाथ विष्णुः स्यात् कृष्णेऽर्के वसुदैवते (वि.प्र.को.णान्त.१९) ।

## ६७. धेन्वादयः ।२-९।

धेनुजह्नुस्थाणुवेणुवग्नवः । एते नुप्रत्ययान्ता निपात्यन्ते । 'धेट पा पाने' सन्ध्यक्षरान्तानामाकारः । धयति पिबति वत्सः तान्[1] (ताम्) *धेनुः* नवप्रसूता गवादिः । 'ओ हाक् त्यागे'

---

1. 'तान्' म.सं.- । यहाँ 'तान्' के स्थान पर 'ताम्' या 'याम्' पाठ होना चाहिए । बछड़ा जिसे पीता है, या उसे पीता है ।

जहातीति *जह्नुः* विद्याधरः ऋषिविशेषो वा । 'ष्ठा गतिनिवृत्तौ' जगति प्रलीनेऽपि तिष्ठतीति *स्थाणुः* ईश्वरः । 'वै शोषणे' सन्ध्यक्षरान्तानामाकारः । वायति जलं *वेणुः* वंशः । 'वच परिभाषणे' वक्तीति *वग्नुः*[1] प्रियवादी, एवमादयो द्रष्टव्याः ।

धेनु, जह्नु, स्थाणु, वेणु, वग्नु ये सभी नु प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं ।

*धेनुः* धेट पा पाने (भू.२६४) । पीना, पान करना । धयति, पिबति वत्सः ताम् (बछड़ा जिसका दूध पीता है) । सन्ध्यक्षरान्तानामाकारोऽविकरणे (कात.२/४/५०) इस सूत्र से धेट् घटक एकार को आकार । धा+नु, निपातन से आकार के स्थान में एकार, विभक्तिकार्य, धेनुः । नवप्रसूत गाय आदि । धेनुः स्यान्नवसूतिका (अ.को.२/९/७१) ।

*जह्नुः* ओ हाक् त्यागे (अ.७१) । जहाति । हा+नु, हा को द्वित्व, प्रथम हकार को जकार, तथा आकार का लोप, विभक्तिकार्य, जह्नुः । विद्याधर या ऋषिविशेष राजर्षि मुनिविशेष । जह्नु की दत्तक पुत्री–जाह्नवी–गङ्गा । जह्नुः स्यात् पुंसि राजर्षिभेदे च मधुसूदने (मेदिनी.नान्त.७) ।

*स्थाणुः* ष्ठा गतिनिवृत्तौ (भू.२६७) । रुकना । जगति प्रलीनेऽपि तिष्ठति (जो संसार के प्रलीन हो जाने पर भी विद्यमान रहता है) । स्था+नु, न् को ण्, विभक्तिकार्य, स्थाणुः । ईश्वर । शङ्कर । ध्रुव । शङ्कु । शाखापत्रादिरहित वृक्ष, ठूंठा पेड़, कील । स्थाणुः कीले स्थिरे हरे (वि.प्र.को.णान्त.२७) ।

---

सम्भवतः 'ताम्' के स्थान पर मुद्रण दोष से 'तान्' पाठ हो गया हो । अतः 'ताम्' या 'याम्' ऐसा पाठ होना चाहिए । द्र०–वै.सि.कौ.उ.सू..–३–३४) ।

1. 'वग्नुः' यह शब्द बं.सं. एवं ति.अनु. में अनुपलब्ध है ।

*वेणुः* वै शोषणे (भू.२६१) । सुखाना । 'वायति जलम्' (जो जल को सुखाता है) 'वै' में सन्ध्यक्षर ऐकार को आकार । वा+नु, आकार को एकार, न् को ण्, वेणुः । वंश (बांस) । वेणुर्भूपान्तरे वंशे (वि.प्र.को.णान्त.२७) ।

तु.– अजेर्वी, वेणुः (वै.सि.कौ.३/३८) ।

*वग्नुः* वच परिभाषणे (अ.३०) । वक्ति । वच्+नु, च् को ग्, विभक्तिकार्य, वग्नुः । प्रियवादी । वावदूकः विप्रलापी च (श्वेत.वृ.३–३३) ।

इसी प्रकार की आकृति वाले दूसरे शब्दों को भी इसी प्रक्रिया के अनुसार सिद्ध कर लेना चाहिए ।

यथा–कृणुः–कोशकार । जिगनुः वायु । कृत्नुः शिल्पी । ह्नुः व्याधि, शस्त्र ।

## ६८. रमिकासिकुषिपातृवचिरिचिसिचिगुभ्यस्थक् ।२–१०।

एभ्यस्थक्प्रत्ययो भवति । को यण्वद्भावार्थः । 'रमु क्रीडायाम्' रमति[1] (रमते) मनसि *रथः* स्यन्दनः । 'काशृ दीप्तौ' काशतीति[2] (काश्यते) *काष्ठं* दारु । 'कुष निष्कर्षे' कुष्णातीति *कुष्ठं* गन्धद्रव्यं रोगविशेषश्च । 'पा पाने' पीयते *पाथः* जलम् । 'तॄ प्लवनतरणयोः' तीर्यते अनेनेति *तीर्थम्* धर्मस्थानं पुण्यस्थलं वा । 'वच परिभाषणे उच्यते *उक्थं*

---

1. रमति म.सं. । 'रमु क्रीडायाम्' (भू.आ.५६१) धातु आत्मनेपदी है । वृत्ति में परस्मैपद 'रमति' पाठ है । धातुपाठ के अनुसार 'रमते' पाठ होना चाहिए ।
2. काशति म.सं. । 'काशृ दीप्तौ' (दि.१०५) धातु दैवादिक आत्मनेपद है । वृत्ति में 'काशति' रूप असाधु है । दैवादिक काश् से काश्यते तथा भौवादिक कासृ (भू.४३९) से 'कासते' रूप होगा ।

साम । 'रिचिर्[1] विरेचने' रिणक्ति इति *रिक्थम्* । 'षिचिर् चलने'[2] *सिक्थं* मधूच्छिष्टम् । 'गु पुरीषोत्सर्गे' गुवतीति *गूथं* विष्ठा ।

रम्, कास्, कुष्, पा, तृ, वच्, रिच्, सिच्, गु इन धातुओं से थक् प्रत्यय होता है । थक् में क् अनुबन्ध यण्वद्भावार्थ है । इससे धातु को गुण का निषेध होता है ।

***रथः*** रमु क्रीडायाम् (भू.आ.५६१) । क्रीडा=खेलना । रमण करना । रमते मनसि (जो मन में अच्छा लगता है) रम्+थक्, मकार का लोप, विभक्तिकार्य, रथः । स्यन्दन । काय । पाद । वेतस वृक्ष । रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे (अने.सं.को.श्लो.२२४) ।

***काष्ठम्*** काशृ दीप्तौ (दि.१०५, भू.४३९–कासृ) । चमकना, प्रकाशित होना । काश्यते या कासते । काश्+ थक्, शकार को षकार, षकार परक थकार को 'तवर्गस्य षटवर्गाट् टवर्गः' (कात.३/८/५) इस सूत्र से ठकार, विभक्तिकार्य, काष्ठम् । दारु । इन्धन ।

***कुष्ठम्*** कुष निष्कर्षे (क्री.४०) । निष्कर्ष=रगड़ कर निकालना, चमकना । कुष्णाति । कुष्+थक्, थकार को ठकार, विभक्तिकार्य, कुष्ठम् । (पु.नपु.) गन्धद्रव्य (कूट औषधि) तथा रोगविशेष (श्वेत कुष्ठ) । कुष्ठं रोगे पुष्करेऽस्त्री (मेदिनी.ठान्त.३) ।

---

1. 'रिहिर्' म.सं. । कात.धातु में 'रिचिर' पाठ है तथा पा.धा. में भी रिचिर् (क्षी.त.रु.४) ही पाठ उपलब्ध है । तदनुसार वृत्ति में 'रिहिर्' के स्थान पर 'रिचिर्' पाठ रखा गया । सम्भवतः प्रमाद से चकार के स्थान में 'ह' वर्ण हो गया हो ।
2. षिचिर चलने, म.सं. । षिच् धातु कात.धातु. में क्षरण अर्थ में पठित है । तदनुसार वृत्ति में 'षिच क्षरणे' ऐसा पाठ अपेक्षित है ।

*पाथः* पा पाने (भू.२६४) । पीना, पान करना । पीयते (कर्म) पा+थक्, विभक्तिकार्य, पाथः । जल । पाथोऽर्केऽग्नौ जले क्लीबम् (मेदिनी.थान्त.९) । कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् । (अ.को.१/१०/४) ।

*तीर्थम्* तॄ प्लवनतरणयोः (भू.२८३) । पार जाना, तैरना । तीर्यते अनेन (कर्म) । (जिसके द्वारा पार होता है) । तॄ+थक्, ॠ को ईर्, विभक्तिकार्य, तीर्थम्[1] । धर्मस्थान या पुण्य स्थल । तीर्थम्–गुरुः यज्ञः, पुरुषार्थो मन्त्री जलाशयो वा (दया.उ.को.२/७) ।

*उक्थम्* वच परिभाषणे (अ.इ.) । कहना, बोलना । उच्यते । वच्+थक्, 'स्वपिवचि' (कात.३/४/३) इत्यादि सूत्र से वकार को सम्प्रसारण से उकार, 'चजोः कगौ' (कात.४/६/५६) इत्यादि सूत्र से चकार को ककार, विभक्तिकार्य, उक्थम् । साम । सामवेद । साम्युक्थं स्वरपत्तनम् (त्रि.शे.पृ.२६१, श्लो.२) ।

*रिक्थम्* रिचिर् विरेचने (रु.४) । विरेचन=मलशुद्धि होना, दस्त खुलना, खाली करना । रिणक्ति । रिच्+थक्, क् अनुबन्ध से यणवद्भाव के कारण गुणनिषेध, चकार को ककार, विभक्तिकार्य, रिक्थम् । दायभाग । उत्तराधिकार में प्राप्त सम्पत्ति ।

*सिक्थम्* षिचिर् क्षरणे (षिच तु.११) । क्षरण=सींचना, रिसना । सिञ्चति । धात्वादेः षः सः । सिच्+थक्, चकार को ककार, विभक्तिकार्य, सिक्थम् । मधु का उच्छिष्ट=मोंम (शहद से निकाला हुआ) । सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम् (मेदिनी.थान्त.१३) ।

*गूथम्* गु पुरीषोत्सर्गे (तु.१०६) । पुरीषोत्सर्ग=मल निकालना, शौच करना । गुवति । गु+थक्, निपातन से दीर्घ, (बं.सं.) विभक्तिकार्य,

---

1. तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च ।
अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥ (मेदिनी.थान्त.७) ।

गूथम् । विष्ठा । मल । पुरीषं गूथवर्चस्कमस्त्री विष्ठाविषे स्त्रियौ । (अ.को.२/६/६८) ।

## ६९. अवे भृञः ।२–११।

अवे उपपदे भृञस्थग् भवति । 'डु[1] धाञ् [?] डु भृञ्' अव विभर्ति इति *अवभृथः* यज्ञान्तस्नानम् ।

अव उपपदपूर्वक भृञ् धातु से थक् प्रत्यय होता है । क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है ।

*अवभृथः* डु भृञ् धारणपोषणयोः (अ.८५) । धारण करना, पोषण करना । अव बिभर्ति । अव (पूर्वक) भृ+थक्, यण्वद्भाव के कारण गुणाभाव, विभक्तिकार्य, अवभृथः । यज्ञसमाप्ति पर शुद्धि के लिए किया जाने वाला विशेष स्नान । दीक्षान्तोऽवभृथो यज्ञे (अ.को. २/७/२७) ।

## ७०. न्युदोः शीङ्गाभ्याम् ।२–१२।

अनयोरुपपदयोराभ्यां यथासङ्ख्यं थग् भवति । 'शीङ् स्वप्ने' निपूर्वः । नियतं शेते जनोऽत्र *निशीथः* अर्धरात्रिः । 'कै गै रै शब्दे' सन्ध्यक्षरान्तानामाकारः । उत्पूर्वः[2] । उद्गीयते *उद्गीथः* श्रुतेः प्रणवः ।

---

1. डु धाञ् ? 'डु भृञ्' ऐसा वृत्ति में पृथक् पाठ है । कात.धातु. में धाञ् एवं भृञ् धातु एक साथ पठित हैं पृथक् नहीं । अतः 'डु धाञ् डु भृञ् धारणपोषणयोः' (अ.८५) ऐसा पाठ वृत्ति में होना चाहिए ।
2. उदपूर्वः म.सं. । 'उद्गीथ' शब्द में उत् पूर्वक गै धातु का प्रयोग है । अतः यहाँ 'उत्' ऐसा तकारान्त 'उत्पूर्वः' पाठ 'उदपूर्वः' के स्थान पर किया गया ।

'नि' तथा 'उत्' के उपपद में रहने पर यथाक्रम शीङ् एवं गा धातु से थक् प्रत्यय होता है । थक् में क् अनुबन्ध होने से यण्वद्भाव के कारण धातु को गुण का निषेध होता है ।

*निशीथः* शीङ् स्वप्ने (अ.५५) । सोना, निद्रा लेना । नियतं शेते जनोऽत्र (जिस समय व्यक्ति निश्चित रूप से सोया रहता है) । नि (पूर्वक) शी+थक्, गुण का निषेध, विभक्तिकार्य, निशीथः । अर्धरात्रि । रात्रिमात्र । निशीथस्तु पुमानर्द्धरात्रिमात्रके (मेदिनी.थान्त.२०) ।

*उद्गीथः* गै शब्दे (भू.२५६) । उद् गीयते (कर्म) । उत् पूर्वक प्रयोग । सन्ध्यक्षर ऐ को आकार, उद् गा+थक्, आकार को ईकार, विभक्तिकार्य, उद्गीथः । वेद का प्रणव 'ओम्' । सामध्वनि । साम का भेद । उद्गीथः प्रणवः सामवेदध्वनिः इत्यरुणः (अम.सुधा.पृ.४५५) ।

## ७१. पृष्ठयूथप्रोथाः ।२–१३।

एते थक्प्रत्ययान्ता निपात्यन्ते । 'पृषु वृषु' पर्षतीति *पृष्ठं* पश्चात्कायः । 'यु मिश्रणे' यूतीति[1] (यौतीति) *यूथं* समूहः । 'भृङ्'[2] (भ्रुङ्) 'पृङ्' (प्रुङ्) प्रवते चलतीति *प्रोथः* अश्वघोषान्तरम्[3] (घोणान्तरम्) ।

पृष्ठ, यूथ, प्रोथ ये तीनों थक् प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

---

1. यूतीति, म.सं. । 'यु मिश्रणे' इस आदादिक धातु का 'यौति' रूप होता है । वृत्ति में 'यूति' पाठ असमीचीन है । अतः 'यूतीति' के स्थान पर 'यौतीति' पाठ अपेक्षित है ।
2. भृङ पृङ, म.सं. । पृङ् से 'प्रवते' रूप नहीं होता । कात. धातु. में 'प्रुङ् गतौ' (भू.४५९) ऐसा धातु पाठ है ।
3. अश्वघोषान्तरम् म.सं. । 'घोषा' के स्थान पर 'घोणा' पाठ शुद्ध होगा । अश्वनासान्तरम् (ब.सं.) ।

**पृष्ठम्** पृषु सेचने (भू.२२६) । सेचन=सींचना । पर्षति । पृष्+थक्, थकार को ठकार, विभक्तिकार्य, पृष्ठम् । शरीर का पिछला भाग । स्तोत्र । पृष्ठं चरममात्रेऽपि देहस्यावयवान्तरे (मेदिनी.ठान्त.७) ।

**यूथम्** यु मिश्रणे (अ.६) । मिलना, जोड़ना । यौति । यु+थक्, निपातन से धातु को दीर्घ ऊकार, विभक्तिकार्य, यूथम् । समूह । तिर्यग् जातीय का समूह । यूथं तिरश्चां पुन्नपुंसकम् (अ.को.२/५/४१) । यूथं तिर्यक्समूहेऽस्त्री पुष्पभेदे च योषिति (मेदिनी.थान्त.११) ।

**प्रोथः** प्रुङ् गतौ (भू.४५९) । प्रवते । प्रुङ्+थक्, थकार को ठकार, निपातन से धातुघटक उकार को ओकार गुणादेश, विभक्तिकार्य । प्रोथः । अश्व की नाक (नथुन) समुद्रतरङ्ग, नाक के छिद्र का निचला प्रदेश (श्वेत.वृ.२/१२) । प्रोथोऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिषु (मेदिनी.थान्त.१०) ।

## ७२. स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिरुदिमदिमन्दिचन्द्युन्दीदिभ्यो[1] रक् ।२-१४।

एभ्यो धातुभ्यो रक्प्रत्ययो भवति । यण्वद्भावादनुषङ्गलोपः[2] । 'स्फायी ओ प्यायी वृद्धौ' स्फायते *स्फारम्* प्रभूतम् । 'तञ्चि वञ्चि'[3] तञ्चतीति *तक्रम्* मथितम् । वञ्चतीति *वक्रं* कुटिलम् । 'शक्लृ शक्तौ' पां [पातु] शक्नोतीति *शक्रः* ।

1. चन्द्युन्दीदिभ्यः, म.सं. । इदित् धातु को न् आगम करके 'चन्दि' पठित है इसी प्रकार इदि धातु को भी न् आगम् घटित 'इन्दि' ऐसा पाठ होना चाहिए । तदनुसार 'चन्द्युन्दीन्दिभ्यः' ऐसा 'इन्दि' घटित पाठ अपेक्षित है ।
2. कात.व्या. में 'व्यञ्जनान्नोऽनुषङ्गः' (२/१/१२) सूत्र से नकार की अनुषङ्ग संज्ञा तथा 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः (कात.३/६/१) सूत्र से उसका लोप होता है ।
3. वञ्चु-चञ्चु-तञ्चु-त्वञ्चु इत्यादयः सन्तानधातवः ति.अनु. ।

'क्षिप प्रेरणे' क्षिपतीति *क्षिप्रं* शीघ्रम् । क्षुदिर् संवरणे[1] क्षुदतीति (क्षुणत्तीति) *क्षुद्रः* दुर्जनः । 'रुदिर् अश्रुविमोचने' रोदितीति *रुद्रः* शङ्करः । 'मदि हर्षे' माद्यतीति *मद्रः* देशविशेषः । 'मुदि(मदि) स्तुत्यादौ' मन्दते *मन्द्रः* गम्भीरध्वनिः । 'चदि आह्लादने' चन्दतीति' *चन्द्रः* शशी । 'उन्दी क्लेदने' उनत्तीति *उन्द्रः* । [जल] चरविशेषः । 'इदि परमैश्वर्ये' इन्दतीति *इन्द्रो* देवराजः ।

स्फाय्, तञ्च्, वञ्च्, शक्, क्षिप्, क्षुद्, रुद्, मदी, मन्द्, चन्द्, उन्द्, इन्द् इन सभी धातुओं से 'रक्' प्रत्यय होता है । 'रक्' में क् अनुबन्ध के यण्वद्भावार्थ होने से अनुषङ्ग संज्ञक नकार का लोप अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) सूत्र से अनिदनुबन्ध धातुओं को अगुणप्रत्यय परे रहने पर होता है ।

*स्फारम्* स्फायी वृद्धौ (भू.४१३) । बढ़ना, फूलना । स्फायते । स्फाय्+रक्, 'य्वोर्व्यञ्जनेऽये' (कात.४/१/३५) से यकार लोप, 'घोषवत्योश्च कृति' (कात.४/६/८०) से इट् का निषेध, विभक्तिकार्य, स्फारम् । प्रभूत । बहुल । अधिक । समुद्र । सुवर्णादिविकार या बुद्बुद (दया.उ.को.२/१३) । स्फारः स्याद् विकटे स्फारः कनकादेश्च बुद्बुदे (वि.प्र.को.रान्त.२१) ।

*तक्रम्* तञ्चु गतौ (भू.४९) । तञ्चति । तञ्च्+रक्, 'न्यङ्क्वादीनां हश्च घः' (कात.४/६/५७) सूत्र से चकार को ककार, 'अनिदनुबन्धाना' (कात.३/६/१) इत्यादि सूत्र से अनुषङ्गसंज्ञक नकार का लोप,

1. संवरणे मं.सं. । 'क्षुदिर्' धातु 'संपेषण' अर्थ में (रु.६) पठित है, जिसका 'क्षुणत्ति' रूप होता है । वृत्ति में 'क्षुदति' रूप निर्दिष्ट है । 'क्षुदति' तभी सम्भव होता जब यह धातु तुदादि में पठित होती ।

विभक्तिकार्य, तक्रम् । मथित । मथा हुआ । दधि, मट्ठा, मक्खन । तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बु निर्जलम् (अ.को.२/९/५३) ।

***वक्रम्*** वञ्चु गतौ (भू.४९) । वञ्चति । वञ्च्+रक्, चकार को ककार, विभक्तिकार्य, वक्रम् । कुटिल, क्रूर । वक्रः स्यात् कुटिले क्रूरे पुटभेदे शनैश्चरे (वि.प्र.को.रान्त.५२) ।

***शक्रः*** शक्लृ शक्तौ (सु.१५) । समर्थ होना, कर सकना । शक्नोति । शक्+रक्, विभक्तिकार्य, शक्रः । इन्द्र । कुटज । अर्जुन वृक्ष । शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः (अ.को.रामाश्रमी, २/४/६६) ।

***क्षिप्रः*** क्षिप प्रेरणे (तु.५) । प्रेरण=प्रेरित करना । क्षिपति । क्षिप्+रक्, विभक्तिकार्य, क्षिप्रः । शीघ्र । क्षिप्रम् (नपुं.) । लघु क्षिप्रमरं द्रुतम् (अ.को. श्लो.१/१/६८) ।

***क्षुद्रः*** क्षुदिर् संवरणे (संपेषणे–रु.६ ) । पीसना, कूटना । क्षुणत्ति । क्षुद्+रक्, क्षुद्रः । दुर्जन । दीन, हिंसक (श्वेत.वृ.२/१५९) । क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् (मेदिनी.रान्त१७) ।

**रुद्रः** रुदिर् अश्रुविमोचने (अ.३१) । आँसू गिराना, रोना । रोदिति । रुद्+रक्, विभक्तिकार्य, रुद्रः । शङ्कर । एकादश रुद्र ।

रोदयति दानवयोषितः । रोदि+रक्, णि लुक्, ओकार को उकार, रुद्रः । (श्वेत.वृ.२/१७०, दश.वृ.८/३९) ।

तदुक्तं कौर्म्मे–रोदनात्तव रुद्रेति नामधेयं त्वमावह इति (अ.को.रघु.टी.पृ.३३, पंक्ति.१७) ।

तदुक्तं स्कन्दे–रुजः सर्वगता यस्माद् हारयामि जगत्त्रयम् ।
रोदनं हन्मि यस्माच्च, रुद्रस्तस्मादहं प्रिये ॥
(तत्रैव)

*मद्रः* मदी हर्षे (दि.४८) । प्रसन्न होना, आनन्दित होना । माद्यति । मद्+रक्, विभक्तिकार्य, मद्रः । देशविशेष ।

*मन्द्रः* मदि स्तुत्यादौ (भू.३०१) । स्तुति आदि करना । मन्दते । इदित् होने से न् आगम् । मन्द्+रक्, विभक्तिकार्य, मन्द्रः । गम्भीर ध्वनि । मन्द्रस्तु गम्भीरे (अ.को.१/७/२) । स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते (अ.को.१/७/५१ प्रक्षिप्त) ।

चन्द्रः चदि आह्लादने (भू.२६, दीप्तौ च) । आह्लादन=आनन्दित होना, चमकना । इदित् होने से न् आगम । चन्दति । चन्द्+रक्, विभक्तिकार्य, चन्द्रः । शशी । चन्द्रमा । रोगापनयनेन छादनात् चन्द्रः (अ.को.रघु.टी.पृ.२९२, श्लो.१४५) ।

चन्द्रः सुवर्णे कपूरे मेचके रजनीपतौ काम्पिल्ये सलिले काम्ये । (अने.सं.को.पृ.१६, श्लो.१११)

उद्रः उन्दी क्लेदने (रु.१६) । क्लेदन=भीगना । उनत्ति । उन्द्+रक्, नकार का लोप, उद्रः । जलचरविशेष, जलजन्तु । जलमार्जार । उद्बिडाल । सम् पूर्वक उद्र–समुद्रः ।

इन्द्रः इदि परमैश्वर्ये (भू.२२) । परमैश्वर्य=अद्भुत पराक्रम युक्त होना । ईश्वरीय शक्ति होना । इदित् होने से न् आगम । इन्दति । इन्द्+रक्, इन्द्रः । देवराज । अन्तरात्मा । आदित्य, योग । इन्द्रः शचीपतावन्तरात्मन्यादित्ययोगयोः । (वि.प्र.को.–रान्त.६२) ।

## ७३. सुसूधाञ्गृधिशिवतिवृतिछिदिमुदितृपिदम्भिशुभिभ्यश्च ।२–१५।

एभ्यो रक्प्रत्ययो भवति । चकारः समुच्चयार्थः । 'षुञ् अभिषवे' 'षु प्रसवे वा । सुनोति इति सवति वा मदं *सुरा* मद्यम् । 'षूङ् प्राणिगर्भविमोचने' सूते सूरः रविः । 'डु धाञ्' दधातीति *धीरः* अचलः । 'गृधु अभिकाङ्क्षायाम्' गृध्यतीति

[*गृध्रः* पक्षिविशेषः] ['श्विता] वर्णे' श्वेतते *श्वित्रं* कुष्ठम् । 'वृतु वर्तने' वर्तते *वृत्रः* इन्द्रारिः। 'छिदिर् द्वैधीकरणे' छिनत्तीति *छिद्रं* रन्ध्रम् । 'मुदि हर्षे' मुद्यते लोकोऽनया *मुद्रा* आज्ञाकरणम् । 'तृप [प्रीणने[1], तृप्यन्ते देवा अनेन इति *तृप्रः*] पुरोडाशः । 'दम्भु दम्भे' दभ्नोतीति *दभ्रं* स्तोकम् । 'शुभ शुम्भ शोभार्थे' शुभतीति *शुभ्रं* शुक्लं मङ्गलं वा ।

सु, सू, धा, गृध्, श्वित्, वृत्, छिद्, मुद्, तृप्, दम्भ्, शुभ् इन धातुओं से रक् प्रत्यय होता है । 'रक्' में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । सूत्रस्थ चकार समुच्चयार्थ है । इसके बल से अन्य धातुओं से भी रक् प्रत्यय हो सकता है ।

*सुरा* षुञ् अभिषवे (सु.१) । अभिषव=यज्ञान्त स्नान करना, नहाना । षु में ष् को 'धात्वादेः षः सः' से स् । सुनोति । सु+रक्, क् अनुबन्ध से यण्वद्भाव के कारण धातु को गुणनिषेध, स्त्रीत्व-विवक्षा में 'स्त्रियामादा' इस सूत्र से आ प्रत्यय, विभक्तिकार्य, सुरा । मद्य । शराब । मदिरा । सुरा मद्ये चषकेऽपि सुरा क्वचित् (वि.प्र.को.रान्त.१४) ।

तु.- सु+क्रन् (वै.सि.कौ.उ.२/१८२) ।

*सूरः* षूङ् प्रणिगर्भविमोचने (अ.५४) । गर्भ निकालना, उत्पन्न करना । सूते । धात्वादेः षः सः । सू+रक्, गुणाभाव, विभक्तिकार्य, सूरः । रवि । शूरः तालव्यवानिति पुरुषोत्तमः उणादिवृत्तौ । शूरादयः (सि.चं.उ.२-१०) (अ.को.रघु.टी.पृ.८१) । सूरश्चारभटे सूर्ये (वि.प्र.को.रान्त.२५) ।

---

1. कीटभक्षितोऽयं पाठः ति.अनु. ।

*धीरः* डु धाञ् धारणपोषणयोः (अ.८५) । धारण करना, पोषण करना । दधाति । धा+रक्, आकार को ईकार, विभक्तिकार्य, धीरः । अचल । धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे (मेदिनी.कान्त.५१) ।

*गृध्रः* गृधु अभिकाङ्क्षायाम् (दि.प.८०) । चाहना । गृध्यति । गृध्+रक्, यण्वद्भाव से गुणनिषेध, विभक्तिकार्य, गृध्रः । पक्षिविशेष । गीध । काक (सरस्वती–२/३/३१) । गृध्रः खगान्तरे पुंसि वाच्यलिङ्गोऽथ लुब्धके (मेदिनी.रान्त.२६) ।

गृध्यति अभिकाङ्क्षति मांसादिकमिति (अ.को.रघु.टी.पृ.३१५) ।

*श्वित्रम्* श्विता वर्णे (भू.४८४) । वर्ण=सफेद होना, शुभ्र होना । श्वेतते । श्वित्+रक्, विभक्तिकार्य, श्वित्रं । कुष्ठ । सफेद कोढ़ । कुष्ठश्वित्रे दुर्नामकाऽर्शसी (अ.को.२/६/५४) ।

*वृत्रः* वृतु वर्तने (भू.२८४) । वर्तन=वर्ताव करना, रहना, होना । वर्तते । वृत्+रक्, विभक्तिकार्य, वृत्रः । इन्द्र का शत्रु । वृत्र नामक असुर । अन्धक । शत्रु पर्वत, दैत्यभेद (वै.को.६/१/५६) । वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे (वै.सि.कौ.उ.२/१३) ।

*छिद्रम्* छिदिर् द्वैधीकरणे (रु.३) । टुकड़े करना, काटना । छिनत्ति । छिद्+रक्, गुणाभाव, विभक्तिकार्य, छिद्रम् । रन्ध्र । बिल । दोष ।

*मुद्रा* मुद हर्षे (भू.३०४) । प्रसन्न होना । मुद्यते लोकोऽनया (जिससे लोक प्रसन्न होता है) । मुद्+रक्, गुणाभाव, स्त्री. में आ प्रत्यय, विभक्तिकार्य, मुद्रा । मोहर लगाने का उपकरण । विश्वसनीय, नीलाञ्जनविशेष साधन (श्वेत.वृ.२/१३) । चिह्नकरण । मुद्रा प्रत्ययकारिणी (वै.सि.कौ.उ.२/१३) (त्रि.शे.पृ.२९८, श्लोक २९) ।

*तृप्रः* तृप प्रीणने (दि.३५,सु.२१) । प्रीणन=तृप्त होना । तृप्यन्ते देवा अनेन (जिससे देवता तृप्त होते हैं) । तृप्+रक्, गुणाभाव, विभक्तिकार्य, तृप्रः । पुरोडाश । चावलों को पीसकर कपाल में बनाई गई यज्ञ की आहुति । ति.अनु.–रक्तयज्ञ ।

*दभ्रम्* दम्भु दम्भे (सु.१९) । दम्भ=ठगना, ढोंग करना । दभ्नोति । दम्भ्+रक्, म् का लोप, विभक्तिकार्य, दभ्रम् । स्तोक । थोड़ा । दभ्रः समुद्रः स्वल्पं च (वै.सि.कौ.उ.सू.२/१७) ।

*शुभ्रम्* शुभ शोभार्थे (तु.३७) । शोभित होना । शुभति । शुभ्+रक्, क् अनुबन्ध के कारण यण्वद्भाव होने से गुणाभाव, विभक्तिकार्य, शुभ्रम् । शुक्ल या मङ्गल । दीप्त । सफेद । शुभ्रं प्रदीप्ते धवलेऽभ्रके (वि.प्र.को.रान्त.७१) ।

## ७४. तम्यमिजीनां दीर्घश्च ।२–१६।

एभ्यो रक्प्रत्ययो भवति दीर्घश्च । 'तमु काङ्क्षायाम्' ताम्यतीति *ताम्रं* शुल्वम् । 'अम द्रम हम्म मीमृ हय गतौ' अम्यते सेव्यते *आम्रः* सहकारः । 'जि जये' जयतीति *जीरः*[1] वृक्षविशेषः ।

तम्, अम्, जि इन धातुओं से रक् प्रत्यय तथा धातु को दीर्घ होता है ।

*ताम्रम्* तमु काङ्क्षायाम् (दि.४३) । काङ्क्षा=चाहना । ताम्यति । तम्+रक्, धातु की उपधा को प्रकृत सूत्र से दीर्घादेश, विभक्तिकार्य, ताम्रम् । शुल्व (तांबा) ।

---

1. जिरो वृक्षविशेषः बं.सं. । यहाँ प्रकृत सूत्र से दीर्घ होकर 'जीरः' ऐसा पाठ अपेक्षित है ।

*आम्रः* अम गतौ (भू.१६०) । अम्यते सेव्यते । अम्+रक्, धातु की उपधा को प्रकृत सूत्र से दीर्घादेश, विभक्तिकार्य, आम्रः । सहकार । आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः (अ.को.२/४/३३) ।

*जीरः* जि जये (भू.१९१) । जीतना, विजयी होना । जयति । जि+रक्, धातु की उपधाभूत इकार को दीर्घ ईकार, विभक्तिकार्य, जीरः । वृक्षविशेष ।

अग्नि, वृद्ध, अश्व, शरत् (श्वते.वृ.२/२६) । अणु, खड्ग, वणिग्द्रव्य (दया.उ.को.२/२४), (पा.उ. जोरी च, २/२६) ।

म.भा. 'रकि ज्यः सम्प्रसारणम्' (१/१/४) से ज्या को सम्प्रसारण, रक्, जीरः ।

जीवे रदानुक् (दश.वृ.१/१६३) । जीवति प्राणान् धारयति जीरदानुः । औषध (वैदिक प्रयोग) ।

## ७५. शूद्रादयः ।२–१७।

शूद्रोग्रवज्रविप्रभद्रगौरभेरीराः । एते· रक्प्रत्ययान्ता निपात्यन्ते । 'शदलृ शातने' शीयते *शूद्रः* तुरीयो वर्णः । [उच समवाये] उच्यत इति *उग्रः* दुःसहः । 'टु ओ स्फूर्जा[1] वज्रनिर्घोषे' स्फूर्जतीति *वज्रं* [पविः । वि] द ज्ञाने' वेत्तीति *विप्रः* ब्राह्मणः । 'भदि कल्याणे सौख्ये च' भन्दते *भद्रं* कल्याणम् । 'गाङ् गतौ' गायते *गौरः* अवदातः । स्त्रियां *गौरी* अवदाता भवानी वा । 'ञि भी भये' बिभेति जनोऽनया *भेरी* दुन्दुभिः । 'इण् गतौ' एति जनः इमाम् *इरा* सुरा । कपिलिकादिदर्शनाल्लत्वम् । *इला* भूमिः ।

---

1. पाठा.– व्रज गतौ बं.सं. ।

शुद्र, उग्र, वज्र, विप्र, भद्र, गौर, भेरी, इरा ये सभी रक् प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं । 'रक्' में क् अनुबन्ध के कारण धातु को गुण का निषेध होता है ।

**शूद्रः** शदलृ शातने (भू.५६३, तु.५९) । शातन=गिरना, जीर्ण होना, कम होना । शीयते[1] । शद्+रक्, निपातन से धातु को ऊकारादेश, विभक्तिकार्य, शूद्रः । चतुर्थ वर्ण । जाति वाची । स्त्री–शूद्री । शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः (अ.को.२/१०/१) ।

शुचेर्दश्च, शुच्+रक्, दकारान्तादेश, दीर्घ (श्वेत.वृ.२–२१) ।

***उग्रः*** उच समवाये (दि.६२) । समवाय=इकट्ठा होना, एकत्र होना । उच्यते । उच्+रक्, चकार को गकार, विभक्तिकार्य, उग्रः । दुःसह । महेश्वर, उत्कट क्षत्र (दया.उ.को.२/२९) । उग्रः कपर्दी श्रीकण्ठः (अ.को.१/१/३४) । उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिषूत्कटे (मेदिनी.रान्त.९) ।

***वज्रम्*** टु ओ स्फूर्जा वज्रनिर्घोषे (भू.७०) । वज्रनिर्घोष=बादल गरजना, बिजली का शब्द होना । स्फूर्जति । स्फूर्ज्+रक्, निपातन से स्फूर् के स्थान में वकारादेश, एवं रेफ लोप, विभक्तिकार्य, वज्रम् । इन्द्र का शस्त्र ।

व्रज् (गतौ)+रक्, निपातन से रेफ का लोप (वै.सि.कौ.उ.२/२/२७) वज्रम् । क्षेत्र, तात, चय, रेणु, कुलिश, हीरक (अने.सं.को.२/४६५) । वज्रोऽस्त्री हीरके पवौ (वै.सि.कौ.उ.२/२७) ।

***विप्रः*** विद ज्ञाने (अ.२७) । जानना । विद्+रक्, धातु को पकारादेश, विभक्तिकार्य, विप्रः । ब्राह्मण । मेधावी ।

---

1. शद् के स्थान में 'शदेः शीयः' (कात.३/६/७९) सूत्र से 'शीय' आदेश होकर 'शीयते' रूप होता है ।

वप्+रक्, उपधा को इकार, विप्रः (वै.सि.कौ.उ.२/२७) ।

*भद्रम्* भदि कल्याणे सौख्ये च (भू.३००) । कल्याण=शुभ कर्म करना, सुखी होना । इदित् होने से न् आगम । भन्दते । भन्द्+रक्, निपातन से न् का लोप विभक्तिकार्य, भद्रम् । कल्याण । भद्रः शिवे खञ्जरीटे वृषभे च कदम्बके (मेदिनी.रान्त७०) ।

*गौरः* गाङ् गतौ (भू.४५९) । गायते । गा+रक्, निपातन से धातुघटक आकार को औकार, विभक्तिकार्य, गौरः । अवदात । सफेद । गौरः श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेशरे । (मेदिनी.रान्त.२७) ।

स्त्री. में नदाद्यन्चि इत्यादि सूत्र से ई, विभक्तिकार्य, गौरी, शुभ्रा या भवानी ।

गुङ्+रक्, वृद्धि, गौरोऽरुणे सिते पीते (वै.सि.कौ.उ.२/२७) ।

*भेरी* ञि भी भये (अ.६८) । डरना । बिभेति जनोऽनया (जिससे व्यक्ति डरता है) । भी+रक्, क् अनुबन्ध के कारण यण्वद्भाव के द्वारा गुण–निषेध होने पर भी निपातन बल से गुणादेश, स्त्री. में ई प्रत्यय, विभक्तिकार्य, भेरी । दुन्दुभि । बड़ा ढोल ।

*इरा, इला* इण गतौ (अ.१३) । एति जनः इमाम् (मनुष्य जिसे प्राप्त करता है) इ+रक्, गुणाभाव स्त्री. में आ प्रत्यय, विभक्तिकार्य, इरा । सुरा, शराब । इरा भूवाक्सुराम्बुषु (मेदिनी.रान्त.९) ।

कपिलिकादिदर्शनाल्लत्वम् (कपिरिकादेर्लोकतः सिद्धिः कपिरिका–कपिलिका दु.वृ.कात.३/६/९९) इस नियम से जैसे कपिरिका–कपिलिका

आदि में लत्व देखा जाता है वैसे ही 'इरा' में र् को ल् होकर 'इला' शब्द भी निष्पन्न होता है । भूमि ।

## ७६. वृश्चिककृषिभ्यां किकः ।२–१८।

आभ्यां किकप्रत्ययो भवति । 'व्रश्चू छेदने' वृश्चतीति *वृश्चिकः* अली । 'कृष विलेखने' कृष्यतीति[1] *कृषिकः* कृषीवलः[2] ।

व्रश्च् तथा कृष् इन दोनों धातुओं से किक प्रत्यय होता है । 'किक' में प्रथम ककार के यण्वद्भावार्थ होने से गुण का निषेध होता है ।

***वृश्चिकः*** व्रश्चू छेदने (तु.१९) । छेदन=काटना, डसना । वृश्चति । व्रश्च्+किक, व्रश्च् घटक रकार को 'गृहिज्या' (कात.३/४/२) इत्यादि सूत्र से सम्प्रसारण से ऋकार, विभक्तिकार्य, वृश्चिकः । भ्रमर । बिच्छू । ८वीं राशि वृश्चिक, केंकड़ा । केंचुआ । वृश्चिकश्च द्रुणे राशौ शूककीटौषधीभिदोः (मेदिनी.णान्त.१६०) ।

***कृषिकः*** कृष विलेखने (तु.६०) । विलेखन=जोतना, हल चलाना । कृषति । कृष्+किक, क् अनुबन्ध से यण्वद्भाव के कारण गुणनिषेध,

---

1. 'कृष विलेखने' (तु.६) तौदादिक धातु से 'कृषति' तथा भौवादिक कृष् से 'कर्षति' रूप होता है । वृत्ति में निर्दिष्ट 'कृष्यति' क्रिया रूप असाधु प्रतीत होता है । यदि कहीं दैवादिक पाठ हो तब 'कृष्यति' की पुष्टि हो सकती है । अतः कृषति या 'कर्षति' पाठ उचित प्रतीत होता है ।
2. गर्भशिशुः ति.अनु. ।

विभक्तिकार्य, कृषिकः । कृषीवल । किसान । हल जोतने वाला । कृषिकश्च कृषीवलः (अ.को.२/९/६) ।

## ७७. मूषिकसि(सी)मिकौ ।२–१९।

एतौ किकप्रत्ययान्तौ निपात्येते । 'मुष खण्डने'[1] मुष्यतीति *मूषिकः* आखुः । 'स्यमु स्वन ध्वन शब्दे' स्यमतीति *सिमिकः*[2] (सीमिकः) तरुविशेषः ।

मूषिक एवं सिमिक ये दोनों किक प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*मूषिकः* मुष स्तेये (क्री.४९) । स्तेय=चुराना । मुष्णाति । मुष्+किक, यण्वद्भाव से गुणनिषेध, निपातन से धातु को दीर्घ, विभक्तिकार्य, मूषिकः । आखु । चूहा ।

*सिमिकः* स्यमु शब्दे (भू.५४१) । शब्द करना । स्यमति । स्यम्+किक, य् को सम्प्रसारण से इ, विभक्तिकार्य, सिमिकः । तरुविशेष ।

दीर्घादिश, सीमिकः (श्वेत.वृ.२–४५) (उज्ज्वल.२/४३) ।

## ७८. क्रिय इकः ।२–२०।

अस्मादिकप्रत्ययो भवति । 'डु क्रीञ् द्रव्यविनिमये' क्रीणातीति *क्रयिकः* क्रेता ।

---

1. मूर्धन्यान्त 'मुष्' (क्री.४९) धातु 'स्तेय' अर्थ में तथा दंन्त्य 'मुस्' खण्डन (दि.५९) अर्थ में पठित है । वृत्ति में निर्दिष्ट मुष धातु के दिवादि में पठित न होने से उससे 'मुष्यति' नहीं हो सकता । अतः 'मुष्यति' इस व्युत्पत्ति की दृष्टि से 'मुस खण्डने' ऐसा धातुपाठ वृत्ति में होना चाहिए । 'मुष स्तेये' से मुष्णाति इस व्युत्पत्ति से सिद्धि करनी चाहिए ।
2. पाठाः सीमिकः (बं.सं.) स्यमेः किकन् यण् दीर्घश्च सीमिकः (सरस्वती–२/२/१७) ।

क्री धातु से इक प्रत्यय होता है । इसमें 'क' यणवद्भावार्थ प्रयुक्त नहीं है ।

***क्रयिकः*** डु क्रीञ् द्रव्यविनिमये (क्री.१) । द्रव्यविनिमय=पैसा देकर सामान खरीदना, व्यापार करना । क्रीणाति । क्री+इक, ईकार को एकार गुण, एकार को 'ए अय्' (कात.१/२/१२) सूत्र से अय् आदेश, विभक्तिकार्य, क्रयिकः । खरीदने वाला । क्रायकक्रयिकौ समौ (अ.को.२/९/७९) ।

## ७९. श्याह्रञवद्रुदक्षिभ्य इनः ।२–२१।

एभ्य इनप्रत्ययो भवति । 'श्यैङ् गतौ' सन्ध्यक्षरान्तानामाकारः । श्यायत इति *श्येनः* पक्षिविशेषः । 'हृञ् हरणे' गीतेन ह्रियते *हरिणः* मृगः । 'अव रक्ष पालने' अवतीति *अविनः* अध्वर्युः । 'द्रु गतौ' द्रवतीति *द्रविणं* धनम् । 'दक्ष वृद्धौ शीघ्रार्थे च' दक्षते *दक्षिणः* प्रवीणः । स्त्रियां (*दक्षिणा*[1]) दानम् ।

श्या, हृञ्, अव्, द्रु, दक्ष् इन सभी धातुओं से 'इन' प्रत्यय होता है ।

***श्येनः*** श्यैङ् गतौ (भू.४५९) । श्यायते । 'सन्ध्यक्षरान्तानामा-कारोऽविकरणे' सूत्र से 'श्यै' में ऐ को आ । श्या+इन, आकार को एकार गुणादेश, विभक्तिकार्य, श्येनः । पक्षि विशेष । बाज पक्षी । श्येनः पक्षिणि पाण्डुरे (मेदिनी.नान्त.२१) ।

---

1. वृत्ति में 'स्त्रियां दानम्' ऐसा निर्दिष्ट है । यहाँ प्रमाद से दान अर्थ वाची शब्द 'दक्षिणा' का संग्रह छूट गया । दक्षिणः (पु.) का स्त्री. में 'दक्षिणा' होता है । अतः 'स्त्रियां दक्षिणा दानम्' ऐसा पाठ होना चाहिए । इसीलिए कोष्ठ में इसे रखा गया । बं.सं.– दक्षिणा दानम् ।

*हरिणः* 'हृञ् हरणे' (भू.५९६) । गीतेन ह्रियते (गीत सुनाकर जिसका हरण किया जाता है) हृ+इन, ऋ को अर् गुण, न को ण, विभक्तिकार्य, हरिणः । मृग । हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् (मेदिनी.णान्त.८७) ।

*अविनः* अव पालने (भू.२०२) । पालन करना, रक्षा करना । अवति । अव्+इन, अविनः । अध्वर्यु । होता । पुरोहित । ऋत्विक् ।

*द्रविणम्* द्रु गतौ (भू.२७९) । द्रु+इन, गुण अवादेश, न को ण विभक्तिकार्य, द्रविणम् । धन । गेह । सत्य । पराक्रम-सुवर्ण । (दया.उ.को.२-५१) । द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे (मेदिनी.णान्त.५१) ।

*दक्षिणः दक्षिणा,* दक्ष वृद्धौ शीघ्रार्थे च (भू.४३०) । बढ़ना, जल्द करना । दक्षते । दक्ष्+इन, नकार को णकार, विभक्तिकार्य, दक्षिणः । प्रवीण । सरल, वामभाग, परतन्त्र, अनुवर्तन (दया.उ.को.२-५१) ।

स्त्री.-दक्षिण+आ, दक्षिणा । दान । प्रतिष्ठा । सत्कारपूर्वक दिया जाने वाला द्रव्य । बं.सं.-यज्ञान्त दानादि । दिक् ।

## ८०. वृजिनाजिनेरिणविपिनतुहिनमहिनानि ।२-२२।

एतानि इनप्रत्ययान्तानि निपात्यन्ते । 'वृजी वर्जने' वृज्यतेऽपनीयतेऽनेनेति *वृजिनं* पापम् । 'अज गतिक्षेपणयोः' अजतीति *अजिनं* चर्म । 'ऋ गतौ' इयर्तीति *इरिणम्* ऊषरं क्षेत्रम् । 'डु वपु' उह्यते *विपिनं* वनम् । 'तुहिर् दुहिर् अर्दने' तोहति अर्दति *तुहिनम्* । अथ वा 'दह भस्मीकरणे' दहतीति *तुहिनम्* दस्य तुकारादेशः हिमम् । 'मह पूजायाम्' महतीति *महिनं* महत्त्वम् ।

वृजिन, अजिन, इरिण, विपिन, तुहिन, महिन ये सभी 'इन' प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*वृजिनम्* वृजी वर्जने (अ.५५,रु.२०,चु.२६४) । वर्जन=छोड़ना, वर्जित करना । वृज्यते अपनीयते अनेन । वृज्+इन, निपातन से गुणाभाव, विभक्तिकार्य, वृजिनम् । पाप । कुटिल मार्ग । केश । वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु (मेदिनी.नान्त.३४) ।

*अजिनम्* अज गतिक्षेपणयोः (भू.६४) । जाना, फेंकना । अजति । अज्+इन, 'अजेर्वी' (कात.३/४/५१) सूत्र से प्राप्त वी का निपातन से निषेध, विभक्तिकार्य, अजिनम् । चर्म ।

अज्+इन, अज् को अज आदेश तथा 'वी' भाव की निवृत्ति, अजिनम् (श्वेत.वृ.२–५०) ।

*इरिणम्* ऋ गतौ (अ.७४) । इयर्ति । ऋ+इन्, 'अर्तिपिपर्त्योश्च' (कात.३/३/२५) से ऋ को इ, रकार, न् को ण्, विभक्तिकार्य, इरिणम् । ऊषर प्रदेश । खेत । मैदान । शून्य । इरिणं शून्यमूषरम् (अ.को.३/३/५६) ।

*विपिनम्* डु वपु बीजसन्ताने (भू.६०९) । बीज बोना । उप्यते (कर्म) । वप्+इन, निपातन से इकारादेश, विभक्तिकार्य, विपिनम् । वन । गहन । वेपृ (कम्पने)+इन, धातु को ह्रस्व, विपिनम् (श्वेत.२–५५) ।

*तुहिनम्* तुहिर् अर्दने (भू.२४९) । अर्दन=मारना, दुःख देना । तोहति । तुह्+इन, निपातन से गुणाभाव, तुहिनम् ।

अथवा– दह भस्मीकरणे (भू.२४३) दह्+इन, इकार को तुकारादेश, विभक्तिकार्य, तुहिनम् । हिम, बर्फ ।

*महिनम्* मह पूजायाम् (भू.२५०) । महति । मह्+इन, महिनम् । महत्त्व ।

महेरिनण च । चादिनन् । माहिनम्–महिनम् । राज्य । (वै.सि.कौ.२/५६) । बं.सं.=वाद्य ।

## ८१. वचिप्रच्छिश्रिद्रुश्रुप्रुज्वां क्विप् दीर्घश्च ।२–२३।

एभ्यः क्विप्प्रत्ययो भवति दीर्घश्च स्वरस्य चैषाम् । 'वच परिभाषणे' उच्यते *वाक्* वाणी । 'प्रच्छ ज्ञीप्सायाम्'[1] शब्दं पृच्छतीति *शब्दप्राट्* शिष्यः । 'भज श्रिञ्[2] सेवायाम्' पुण्यकृतं श्रयतीति *श्रीः* लक्ष्मीः । 'द्रु गतौ' द्रवतीति द्रूः कामरूपी । 'श्रु गतौ' श्रवतीति श्रूः यज्ञोपकरणं हविर्द्रव्यम् । 'प्रुङ् प्लुङ्' कटं प्रवते *कटप्रूः*[3] कटप्रवर्तकः[4] । जु इति सौत्रोऽयं धातुः । जायते [जवते] जूः जवनम् । पिशाचवाण्यामिति केचित् । वचिप्रच्छ्योः दीर्घे कृतेऽनित्यत्वात् सम्प्रसारणं नेष्यते ।

वच्, प्रच्छ्, श्रि, द्रु, श्रु, प्रु, जु, इन धातुओं से क्विप् प्रत्यय तथा धातु के स्वर को दीर्घादेश होता है ।

---

1. ङीप्सायाम् म.सं. । 'ङीप्सायाम्' के स्थान पर 'ज्ञीप्सायाम्' पाठ किया गया ।
2. श्रीङ् म.सं. । श्रीङ् के स्थान पर 'श्रिञ्' पाठ किया गया ।
3. कटेन प्रवर्तते म.सं. । वृत्ति में म.सं. में निर्दिष्ट 'कटप्रूः' की 'कटेन प्रवर्तते' ऐसी व्युत्पत्ति असङ्गत है । प्रुङ् धातु से प्रवते का कर्म 'कट' होगा । अतः 'कटं प्रवते' ऐसी व्युत्पत्ति होगी । 'कटेन प्रवर्तते' के स्थान पर 'कटं प्रवते' पाठ किया गया । कटं प्रवते कटप्रूः (वै.सि.कौ.अ.सू.३/२/२७८) ।
4. गजमदः बं.सं. ।

***वाक्*** वच परिभाषणे (अ.३०) । कहना, बोलना । उच्यते । वच्+क्विप्, क्विप् का लोप, धातुस्वर को दीर्घ, तथा चकार को ककार, 'स्वपिवचियजादीनां यण्परोक्षाशीःषु' (कात.३/४/३) से प्राप्त सम्प्रसारण का अभाव, विभक्तिकार्य, वाक् । वाणी । शब्द ।

***शब्दप्राट्*** प्रच्छ ज्ञीप्सायाम् (तु.४९) । ज्ञीप्सा=पूंछना, जानने की इच्छा करना । शब्दं पृच्छति (शब्द को पूंछता है) शब्द (पूर्वक) प्रच्छ्+क्विप्, क्विप् का लोप, 'गृहिज्या' इत्यादि सूत्र से प्राप्त सम्प्रसारण का अभाव, धातुस्वर को दीर्घ, तथा 'छ्वोः शूटौ पञ्चमे च' (कात.४/१/५६) से छकार को शकार, छशोश्च (कात.३/६/६०) से श् को ष्, 'हशषछान्तयजादीनां डः' (कात.२/३/४६) से ष् को ड्, ड् को ट्, विभक्तिकार्य, शब्दप्राट् । शिष्य ।

***श्रीः*** श्रिञ् सेवायाम् (भू.६०४) । सेवा करना । पुण्यकृतं श्रयति (जो पुण्यवान् की सेवा करती है) । श्रि+क्विप्, क्विप् का लोप, धातुस्वर इकार को दीर्घ, विभक्तिकार्य, श्रीः[1] । लक्ष्मी ।

***द्रूः*** द्रु गतौ (भू.२७९) । द्रवति । द्रु+क्विप्, क्विप् का लोप, धातुस्वर उकार को दीर्घ, विभक्तिकार्य, द्रूः । कामरूप । हिरण्य ।

***श्रूः*** श्रु गतौ (श्रवणे, भू.२७८) । श्रवति । श्रु+क्विप्, धातुस्वर उकार को दीर्घ, विभक्तिकार्य, श्रूः । यज्ञ की आहुति ।

***कटप्रूः*** प्रुङ् गतौ (भू.४५९) । कटं प्रवते । कट (पूर्वक) प्रु+क्विप्, दीर्घ, विभक्तिकार्य, कटप्रूः । चटाई बनाने वाला । कामुक जन । कीट ।

---

1. श्रीर्वेशरचना शोभा भारती सरलद्रुमे ।
लक्ष्म्यां त्रिवर्गसम्पत्तिविद्योपकरणेषु च ।। (मेदिनी.रान्त.१)

जूः (सौत्र धातु.) । जुङ् गतौ (का.कृ.धा.भू.५५२) । जवते । जु+क्विप्, दीर्घ, क्विप् का लोप, विभक्तिकार्य, जूः । द्रुतगति । वेगवान् । पिशाच वाणी । जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽपि च (वि.प्र.को.जान्त.१) ।

वच् एवं प्रच्छ धातु को दीर्घ करने पर 'गृहिज्यावयि' (कात.३/४/२०) इत्यादि सूत्र से सम्प्रसारण प्राप्त था किन्तु यह सम्प्रसारण अनित्य होने से नहीं होता ।

## ८२. परौ व्रजेश्च ।२–२४।

परावुपपदे व्रजेर्धातोः क्विप्प्रत्ययो भवति । स्वरस्यास्य दीर्घत्वम् । चकारो दीर्घानुवृत्त्यर्थः । 'वज व्रज गतौ' परिव्रजतीति *परिव्राट्* भिक्षुः ।

'परि' के उपपद में रहने पर व्रज् धातु से क्विप् प्रत्यय होता है । व्रज् के स्वर को दीर्घ भी होता है । सूत्रस्थ चकार पूर्वसूत्र (२–२३) से दीर्घ की अनुवृत्ति के लिए पठित है ।

***परिव्राट्*** व्रज गतौ (भू.६३) । परिव्रजति । परि (पूर्वक) व्रज्+क्विप्, व्रज् घटित स्वर को दीर्घ, 'हशषछान्तयजादीनां डः' से यजादित्वात् ज् को ड, तथा ड् को ट्, विभक्तिकार्य, परिव्राट् । भिक्षु ।

## ८३. तनेः कयः ।२–२५।

अस्मात् कयप्रत्ययो भवति । ककार उत्तरत्र यणवत्कार्यार्थः । 'तनु विस्तारे' तनोति वंशं *तनयः* पुत्रः ।

तन् धातु से कय प्रत्यय होता है । 'कय' में क् अनुबन्ध परवर्ती सूत्र (२–२६) में यणवद् भाव के लिए प्रयुक्त है । जिससे धातु को गुण का निषेध होता है ।

*तनयः* तनु विस्तारे (त.१) । विस्तार=बढ़ाना, फैलाना । तनोति वंशम् (वंश को फैलाता है) । तन्+कय, क् अनुबन्ध का अप्रयोग, विभक्तिकार्य, तनयः । पुत्र । आत्मजः तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी । (अ.को.२/६/२७) ।

तन्+कयन्, तनयः (वै.सि.कौ.उ.४/५३९) ।

## ८४ हृञो दोऽन्तश्च ।२–२६।

अस्मात् कयप्रत्ययो भवति । अस्य च दोऽन्तो भवति । अकार उच्चारणार्थः । यण्वद्भावादगुणत्वञ्च । 'हृञ् हरणे' बुद्ध्या अर्थं हरतीति हृदयं मनः ।

हृ धातु से कय प्रत्यय तथा धातु को दकार अन्तादेश होता है । 'द' में अ उच्चारणार्थ है । 'कय' में क् अनुबन्ध से यण्वद्भाव होने से धातु को गुण का निषेध होता है ।

*हृदयम्* हृञ् हरणे (भू.५९६) । हरण करना, चुराना । बुद्ध्या अर्थं हरति (जो बुद्धि से तत्त्व का हरण करता है) । हृ+कय, यण्वद्भाव के कारण 'हृ' में ऋ को गुणनिषेध, तथा द् अन्तादेश, विभक्तिकार्य, हृदयम् । मन । हृदयं मानसे वुक्कोरसोरपि नपुंसकम् (मेदिनी.यान्त.११५) ।

ह्रियते विषयैरिति हृदयम् मनः (वै.सि.कौ.उ.बाल.४/५४०) ।

## ८५ रातेर्डैः[1] ।२–२७।

अस्माड्डैः प्रत्ययो भवति । डकारोऽन्त्यस्वरादिलोपार्थः । 'रा ला आदाने' गुणान् रातीति राः । 'रैः' इत्यात्वम् ।

रा धातु से 'डै' प्रत्यय होता है । 'डै' में डकार 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) सूत्र से अन्त्य स्वर तथा अन्त्य व्यञ्जन वर्णों के लोपार्थ प्रयुक्त है ।

*राः* रा आदाने (अ.२२) । आदान=लेना, ग्रहण करना । गुणान् राति (जो गुणों को ग्रहण करता है) । रा+डै, ड् अनुबन्ध से धातु के अन्त्य स्वर=आकार का लोप, 'रैः' (कात.२/३/१९) इस सूत्र से ऐकार को आकार, विभक्तिकार्य, राः । धन । द्रव्य । राः पुंसि स्वर्णवित्तयोः (मेदिनी.रान्त.१) ।

## ८६. गमेर्डोः ।२–२८) ।

अस्माड्डोः प्रत्ययो भवति । 'गम्लृ गतौ' गच्छतीति गौः 'गोरौ घुटि' इत्यौत्वम् । दिगादिषु दशसु ।

गम् धातु से डो प्रत्यय होता है । इसमें भी ड् अनुबन्ध अन्त्यस्वरादि के लोपार्थ प्रयुक्त है ।

*गौः* गम्लृ गतौ (भू.२७९) । गच्छति । गम्+डो, ड् अनुबन्ध के कारण 'डानुबन्धे'. (कात.२/६/४८) सूत्र से धातुघटक 'अम्' का लोप,

---

1. दैः ग.सं. । वृत्ति में 'दैः' ऐसा पाठ था, जिसके स्थान पर 'डैः' पाठ रखा गया । यतः डु अनुबन्ध के कारण अन्त्य स्वरादि का लोप 'डानुबन्धे' इत्यादि सूत्र से होता है । उसी प्रकार वृत्ति में भी 'दकारः' के स्थान पर 'डकारः' पाठ रखा गया ।

'गोरौ घुटि' (कात.२/२/३३) इस सूत्र से अन्त्य ओकार का औकार, विभक्तिकार्य गौः[1] । दश दिशायें ।

## ८७. ग्लानुदिभ्यां डौः ।२-२९।

आभ्यां डौः प्रत्ययो भवति । 'ग्लै हर्षक्षये' सन्ध्यक्षरान्तानामात्वम् । ग्ला [यतीति ग्लौः चन्द्रः] 'णुद् प्रेरणे' नुद्यते धीवरैः नौः तरी ।

'ग्लै' तथा 'नुद्' इन दोनों धातुओं से 'डौ' प्रत्यय होता है । 'ग्लै' में सन्ध्यक्षर ऐकार को 'सन्ध्यक्षरान्तानामाकारोऽविकरणे (कात.३/४/२०) इस सूत्र से आकार होता है ।

*ग्लौः* 'ग्लै हर्षक्षये' (भू.२५१) । हर्षक्षय=ग्लानि युक्त होना, हर्ष नष्ट होना । ग्लायति । सन्ध्यक्षर ऐ को आ । ग्ला+डौ, ड् अनुबन्ध के कारण धातुस्वर आकार का लोप, विभक्तिकार्य, ग्लौः । चन्द्र । चन्द्रमा ।

*नौः* णुद प्रेरणे (तु.२२) । णो नः' (कात.३/८/२५) से ण् को न् । नुद्यते धीवरैः (केवटों के द्वारा जिसे चलाया जाता है) । नुद्+डौ, ड् अनुबन्ध से धातु में अन्त्य स्वारादि 'उद्' का पूर्वोक्त सूत्र से लोप, विभक्तिकार्य, नौः । नौका । स्त्रियां नौस्तरणिस्तरिः (अ.को.१/१०/१०) ।

## ८८- भ्रमेर्डूः ।२-३०।

अस्माड्डूः प्रत्ययो भवति । 'भ्रमु चलने' भ्रमतीति भ्रूः नेत्रोपरिस्थानम् ।

---

1. वाग्दिग्भूरश्मिवज्रेषु पश्वक्षिस्वर्गवाजिषु ।
नवस्वर्थेषु मेधावी गोशब्दमवधारयेत् ॥ (दश.वृ.२/११)

भ्रम् धातु से डू प्रत्यय होता है । डू में ड् अनुबन्ध अन्त्यस्वादि के लोपार्थ है । 'ऊ' मात्र अवशिष्ट रहता है ।

भ्रूः भ्रमु चलने (भू.५५८) । भ्रमति । भ्रम्+डू, ड् अनुबन्ध से पूर्वोक्त सूत्र (कात.२/६/४२) से 'भ्रम्' में 'अम्' का लोप, विभक्तिकार्य, भ्रूः । आँख के ऊपर रोमपंक्ति । नेत्रोपरि स्थित रोमावलि ।

८९ दमेर्डोस् ।२-३१।

अस्माड्डोस्प्रत्ययो भवति । 'दमु उ [पशमने' दाम्यतीति] दोः भुजः ।

दम् धातु से डोस् प्रत्यय होता है । 'डोस्' में ड् अनुबन्ध अप्रयोगार्ह है । 'ओस्' मात्र प्रयुक्त होता है ।

दोः दमु उपशमने (दि.४२) । दाम्यति । दम्+डोस् । ड् अनुबन्ध से धातुघटक 'अम्' का लोप, लिङ्गसंज्ञा, सि, स् का 'रेफसोर्विसर्जनीयः' (कात.२/३/६३) सूत्र से विसर्ग, दोः । बाहु ।

९० सर्तेरयूः ।२-३२।

अस्मादयूप्रत्ययो भवति । 'सृ गतौ' सरतीति सरयूः सरित् ।

सृ धातु से 'अयू' प्रत्यय होता है ।

सरयूः सृ गतौ (भू.२७४) । सरति । सृ+अयू, ऋ को अर्, विभक्तिकार्य, सरयूः । अयोध्या में स्थित नदी ।

सर्तेरयुः, सृ+अयु, सरयुः । अयूरिति पाठान्तरम्, सरयूः (वै.सि.कौ.उ.सू.३/२२) ।

## ९१ शीङो धुक् ।२-३३।

अस्माद्धुक्प्रत्ययो भवति । 'शीङ् स्वप्ने' शेते अनेनेति *शीधुः* सुराविशेषः ।

'शीङ्' धातु से 'धुक्' प्रत्यय होता है । क् अनुबन्ध अगुणार्थ प्रयुक्त है ।

*शीधुः* शीङ् स्वप्ने (अ.५५) । शेते अनेन (जिससे व्यक्ति बेसुध सोता है) । शी+धुक्, क् अनुबन्ध से गुण का निषेध, विभक्तिकार्य, शीधुः । सुरा । शीधु (नपुं.) ।

## ९२. [भुजिमृङोः] युक्त्युकौ ।२-३४।

अनयोः धात्वोः युक्त्युक्प्रत्ययौ भवतो यथासङ्ख्यम् । 'भुज पालनाभ्यवहारयोः' भुज्यते *भुज्युः* ओदनः । 'मृङ् प्राणत्यागे' म्रियतेऽनेनेति *मृत्युः* अन्तकः । अनयोः गुणो न भवति, औणादिकत्वात् ।

भुज् एवं मृङ् धातुओं से क्रमशः युक् तथा त्युक् प्रत्यय होते है । क् अनुबन्ध यण्वद्भावार्थ (गुणनिषेध) प्रयुक्त है ।

*भुज्युः* भुज पालनाभ्यवहारयोः (रु.१४) । रक्षा करना, खाना । भुज्यते । भुज्+युक्, गुणनिषेध, 'उणादित्वात्' इस हेतु से 'युवुझामनाकान्ताः' से प्राप्त अन का निषेध, विभक्तिकार्य, भुज्युः । ओदन । भात । चावल । पात्र । आदित्य ।

*मृत्युः* मृङ् प्राणत्यागे (तु.१११) । मरना, प्राण छोड़ना । म्रियते अनेन (जिससे व्यक्ति मर जाता है) मृ+त्युक्, क् अनुबन्ध से गुण का निषेध, यु को अन का निषेध, विभक्तिकार्य, मृत्युः । अन्तक । मृत्युर्ना मरणे यमे (मेदिनी.यान्त.४६) ।

उणादि होने से इन दोनों धातुओं को गुण नहीं होता ।

९३. कॄपॄवृञ्निधाञ्भ्यो नः ।२-३५।

एभ्यो नः प्रत्ययो भवति । 'कॄ विक्षेपे'[1] किरतीति *कर्णः* श्रोत्रम् । 'पॄ पालने' पिपर्ति वृक्षं *पर्णम्* दलम् । 'वृञ् वरणे' वृणोतीति *वर्णः* शुक्लादिः । 'डु धाञ्' निपूर्वः । निधीयते *निधानं* निधिः ।

कॄ, पॄ, वृञ् तथा निपूर्वक धाञ् धातुओं से न प्रत्यय होता है ।

**कर्णः** कॄ विक्षेपे (तु.११) । विक्षेप=फेंकना । किरति विक्षिपति । कॄ+न, ॠ को अर्, न् को ण्, विभक्तिकार्य, कर्णः । श्रोत्र । कान । युधिष्ठिर–भ्राता । कर्णः पृथाज्येष्ठसुते सुवर्णालौ श्रुतावपि (वि.प्र.को.णान्त.१२) ।

**पर्णम्** पॄ पालनपूरणयोः (अ.७०) । पिपर्ति । पॄ+न, गुण, नकार को णकार, पर्णम् । दल । पत्ता । पर्ण स्यात् किंशुके पत्रे (वि.प्र.को.णान्त.१४) ।

**वर्णः** वृञ् वरणे (सु.८) । पसन्द करना, वरण करना । वृणोति । वृ+न, गुण, नकार को णकार, विभक्तिकार्य, वर्णः । शुक्ल रंग । अक्षर । ब्राह्मणादि ।

---

1. पाठा. डु कृञ् करणे ति.अनु. ।

*निधानम्* डु धाञ् धारणपोषणयोः (अ.८५) । निधीयते । नि(पूर्वक) धा+न, विभक्तिकार्य, निधानम् । निधि । खजाना ।

## ९४ धृषेर्धिष च ।२-३६।

अस्मात् नः प्रत्ययो भवति धिषादेशश्च । 'ञि धृषा प्रागल्भ्ये' धृष्णोत्यनया *धिषणा* बुद्धिः । धृष्णोतीति *धिषणः* बृहस्पतिः, इत्वविधानादेव न गुणः ।

धृष् धातु से न प्रत्यय तथा धृष् के स्थान पर 'धिष' आदेश होता है ।

*धिषणा* ञि धृषा प्रागल्भ्ये (सु.१८) । प्रागल्भ्य=गर्व करना, बड़ा मानना । धृष्णोति अनया (जिससे अपने को बड़ा मानता है) । धृष्+न, प्रकृत सूत्र से ही 'धृष्' के स्थान पर 'धिष' आदेश, इत्व सहित (धिष) के विधान से गुणाभाव, नकार को णकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, धिषणा । बुद्धि । धिषणः वृहस्पति । धिषणस्त्रिदशाचार्ये धिषणा धियि योषिति (मेदिनी.णान्त.५७) ।

## ९५. हनेर्जघश्च ।२-३७।

अस्मात् नः प्रत्ययो भवति जघादेशश्च । 'हन हिंसागत्योः' हन्ति चित्तमिति *जघनं* कटिप्रदेशः ।

हन् धातु से न प्रत्यय तथा हन् के स्थान में जघ आदेश होता है ।

*जघनम्* 'हन हिंसागत्योः' (अ.४) । मारना, जाना । हन्ति चित्तमिति (जो मन को दूषित=विकृत कर देता है) । हन्+न, हन् को जघ आदेश, विभक्तिकार्य, जघनम् । स्त्री की जङ्घा । कटि का पूर्व

भाग । स्त्रीकट्याः क्लीबे तु जघनं पुरा (अ.को.२/६/७४) । जघनं स्त्रियाः श्रोणिपुरोभागे कटावपि (मेदिनी.नान्त.६७) ।

## ९६. दिवेः ऋन्[1] ।२–३८।

दिवेर्धातोः ऋन्प्रत्ययो भवति । नकार उच्चारणार्थः । 'दिवु क्रीडादिषु' दीव्यतीति देव*ा* पत्युर्भ्राता ।

दिव् धातु से ऋन् प्रत्यय होता है । 'ऋन्' में न् उच्चारणार्थ प्रयुक्त है ।

**देव*ा*** दिवु क्रीडादिषु (दि.१) । खेलना आदि । दीव्यति । दिव्+ऋन्, न् अनुबन्ध का अप्रयोग, धातु की उपधा को गुण, लिङ्गसंज्ञा, सि, 'आ सौ सिलोपश्च' (कात.२/१/६४) ऋ को 'आ', सि का लोप, न् का लोप, देवा । पति का छोटा भाई । देवर । देवा देवरः (सरस्वती.२/१/१२९) ।

## ९७. नञि च नन्देः दीर्घश्च[2] ।२–३९।

अस्मात् नञ्युपपदे ऋन्प्रत्ययो भवति, अस्य स्वरस्य दीर्घश्च । 'टु नदि समृद्धौ' न नन्द(य)तीति भ्रातृजायां *ननान्दा* पत्युर्भगिनी ।

'नञ्' के उपपद में रहने पर नन्द् धातु से ऋन् प्रत्यय होता है तथा धातुस्वर को दीर्घ होता है ।

***ननान्दा*** टु नदि समृद्धौ (भू.२५) । प्रसन्न होना, समृद्ध होना । न नन्दयति भ्रातृजायाम् (जो अपने भाई की पत्नी को प्रसन्न नहीं रखती)

---

1. दिवेर्ऋः–दया.उ.को.२/१०१ ।
2. ऋदीर्घश्च म.सं. । यहाँ ऋ को दीर्घ कहना उचित प्रतीत नहीं होता । अतः केवल दीर्घश्च पाठ ही उचित है ।

न (पूर्वक) नन्द्+ऋन्, धातुस्वर को दीर्घ तथा ऋ के स्थान में आ, विभक्तिकार्य, ननान्दा । पति की बहिन । ननद । धेनुभेद । बाहुलकात् वृद्ध्यभावे ननन्दा (दया.उ.को.२-९९) । ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा, इति शब्दार्णवः (वै.सि.कौ.उ.२-२५२) ।

## ९८. यतेश्च[1] ।२-४०।

अस्मात् ऋन्प्रत्ययो भवति, अस्य स्वरस्य दीर्घश्च । 'यती प्रयत्ने' यतत इति *याता* पतिभ्रातृभार्या ।

यत् धातु से ऋन् प्रत्यय होता है तथा धातुस्वर को दीर्घ होता है ।

***याता*** यती प्रयत्ने (भू.३३४) । प्रयत्न करना, कोशिश करना । यतते । यत्+ऋन्, धातु की उपधा को दीर्घ, ऋ के स्थान में आ, विभक्तिकार्य, याता । पति के भाई की स्त्री । देवरानी । जिठानी । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् (अ.को.२/६/३०) ।

## ९९. नियो डानुबन्धश्च ।२-४१।

अस्मात् ऋन्प्रत्ययो भवति स च डानुबन्ध इष्यते । अन्त्यस्वरादेर्लोपार्थम् । 'णीञ् प्रापणे' नयतीति *ना* पुरुषः ।

नी धातु से ऋन् प्रत्यय होता है तथा उसमें ड् अनुबन्ध का अतिदेश होता है । इसके कारण धातु के अन्त्य स्वर का 'डानुबन्धेऽन्त्यस्वरादेर्लोपः (कात.२/६/४२) इस सूत्र से लोप होता है ।

***ना*** णीञ् प्रापणे (भू.६००) । पहुँचाना, ले जाना । 'णो नः' से ण् को न् । नयति । नी+ऋन्, प्रत्यय को डानुबन्धवद्भाव होने से 'नी' में ईकार का लोप, ऋ को आ, विभक्तिकार्य, ना । पुरुष ।

---

1. यतेर्वृद्धिश्च- (वै.सि.कौ.उ.२/२५४) ।

१००. स्वस्रादयः ।२-४२।

स्वसृनप्तृनेष्ट्रत्वष्ट्रक्षत्तृहोतृपोतृप्रशास्तृपितृमातृदुहितृजामातृभ्रातरः । एते ऋन्प्रत्ययान्ता निपात्यन्ते । 'श्वस प्राणने' श्वसितीति[1] *स्वसा* भगिनी । 'पत्लृ पथे च गतौ' निपूर्वः । न पतति कुलमनेनेति *नप्ता* पौत्रः । 'णश अदर्शने' नश्यति पापमनेनेति *नेष्टा* ऋत्विग्विशेषः । 'तक्षू त्वक्षू तनूकरणे' त्वक्षतीति *त्वष्टा* । अथवा 'त्विष दीप्तौ' त्वेष्टि[2] (त्वेषति) लोचने काष्ठेषु *त्वष्टा* । सूत्रधारः । 'क्षुदिर् संपेषणे' क्षुदति (क्षुणत्ति) पिनष्टि इति *क्षत्ता* प्रतीहारः । 'हु दाने' जुहोतीति *होता* याज्ञिकः । 'पूञ् पवने' पुनातीति *पोता* ऋत्विक् । 'शासु अनुशिष्टौ' प्रशास्तीति *प्रशास्ता* उपाध्यायः । 'पा रक्षणे' पातीति *पिता* जनकः । 'मा माने' मातीति *माता* जननी । 'दुह प्रपूरणे' दोग्धि मातृकुलं *दुहिता* । 'जनीङ् प्रादुभावे' पुत्रप्रतिनिधिः जायते *जामाता* दुहितुः पतिः । 'भ्राजृ दीप्तौ' *भ्राता* ।

स्वसा, नप्ता, नेष्टा, त्वष्टा, क्षत्ता, होता, पोता, प्रशास्ता, पिता, माता, दुहिता, जामाता, भ्राता ये सभी ऋन्[3] प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***स्वसा*** श्वस प्राणने (अ.३३) । प्राणन=श्वाँस लेना, जीना । श्वसिति । श्वस्+ऋन्, 'आ सौ सिलोपश्च' (कात.२/१/६४) से ऋ को

---

1. श्वसति, म.सं. । वृत्ति में इकाररहित 'श्वसति' के स्थान पर 'श्वसिति' पाठ किया गया– रुदादेः सार्वधातुके (कात.रूप.१०५) ।
2. 'त्विष दीप्तौ' (भू.६०७) धातु के भौवादिक होने से 'त्वेषति' रूप होता है । वृत्ति में 'त्वेष्टि' रूप असाधु प्रतीत होता है ।
3. पा.उ. में उपर्युक्त शब्दों में 'स्वसा' को छोड़कर अन्य सभी शब्द तृच् प्रत्ययान्त निष्पन्न होते हैं (द्र– वै.सि.कौ.उ.सू.२/२५२) ।

आ, निपातन से श् को स्, सि का लोप, विभक्तिकार्य, स्वसा[1] । बहिन ।

सु अस् (क्षेपणे)+ऋन्, उपधादीर्घः, स्वसा (वै.सि.कौ.-उ.सू.२/२५३) ।

*नप्ता* पत्लृ गतौ (भू.५५४) । न पतति कुलमनेन (जिससे वंश की परम्परा नहीं रुकती) । नञ् (पूर्वक) पत्+ऋन् निपातन से नञ् लोप का अभाव, पकार घटक अकार का लोप, ऋ को आ, विभक्तिकार्य, नप्ता । पौत्र । दौहित्र । पितामह तथा मातामह के पुत्र का पुत्र । नाती ।

न पतन्ति अनेन पितरो नरके इति नप्ता न पत्+तृच्, नञ् का प्रकृतिभाव तथा अत् का लोप, नप्ता, (वै.सि.को.उ.सू.२/२५२) ।

*नेष्टा* णश अदर्शने (दि.४१) । लुप्त होना, नष्ट होना । णो नः से ण को न । नश्यति पापमनेन (जिससे पाप नष्ट होता है) नश्+ऋन्, त् आगम, धातु में उपधाभूत अकार को एकार, श् को ष्, ऋ को आ और त् को ट्, विभक्तिकार्य, नेष्टा । ऋत्विक् ।

तु.- नयतेः षुग् गुणश्च (वै.सि.कौ.उ.सू.२/२५२) ।

*त्वष्टा* त्वक्षू तनूकरणे (भू.२०६) । तनूकरण=छीलना, पतला करना । त्वक्षति । त्वक्ष्+ऋन्, निपातन से त् आगम, तकार को टकार, क्षकार को षकार, लिङ्गसंज्ञा, सि ऋ को आकार, सिलोप, त्वष्टा ।

अथवा त्विष् दीप्तौ (भू.६०७) । त्वेषति लोचने काष्ठेषु (नेत्र और लकड़ी में जो चमकता है) । त्विष्+ऋन्, त् आगम, इकार को

1. पा.उ.- सु.अस् ऋन् 'ऋदुशनस्पुरुदंशोऽनेहसां च' (अ.७/१/९४) से ऋ को अनङ्, अप्तृन्तृच्स्वसृ (अ.६/४/११) इत्यादि सूत्र से उपधादीर्घ, सुलोप, न् लोप, स्वसा ।

अकार, त् को ट्, लिङ्गसंज्ञा, सि, ऋ को आकार, त्वष्टा । सूत्रधार । विश्वकर्मा प्रजापति । त्वष्टा पुमान् देवशिल्पितक्ष्णोरादित्यभिद्यपि (मेदिनी.टान्त.१६) ।

*क्षत्ता* क्षुदिर् संपेषणे (रु.६) । संपेषण=पीसना, कूटना । क्षुणत्ति । क्षुद्+ऋन्, त् आगम, धातुघटक उकार को अकार, ऋ को आकार, द् को त्, विभक्तिकार्य, क्षत्ता । सारथि । द्वारपाल । शूद्रा का पुत्र । रुद्र । मुसल । क्षत्ता शूद्रात् क्षत्रियाजे प्रतीहारे च सारथौ (मेदिनी.तान्त.७) । क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे (वै.सि.कौ.३०२/२५०) ।

क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । क्षद्+तृच् (वै.सि.कौ.उ.सू.२/२५०) ।

*होता* हु दाने (अ.६७) । जुहोति । हु+ऋन्, त् आगम, धातुघटक उकार को ओकार गुण, ऋ को आ, विभक्तिकार्य, होता । याज्ञिक ।

*पोता* पूञ् पवने (क्री.८) । पवित्र करना । पुनाति । पू+ऋन्, त् आगम, धातु को गुण, ऋ को आ, लिङ्गसंज्ञा, सि, सि लोप, पोता । ऋत्विक् । ऋत्विक्भेद ।

*प्रशास्ता* शासु अनुशिष्टौ (अ.३९) । अनुशासित करना, नियन्त्रण करना । प्र पूर्वक, प्रयोग । प्रशास्ति । प्र शास्+ऋन्, त् आगम, ऋ का आ, विभक्तिकार्य, प्रशास्ता । उपाध्याय ।

*पिता* पा रक्षणे (अ.२६४) । रक्षा करना । पाति । पा+ऋन्, त् आगम, पा घटक आकार को इकार, लिङ्गसंज्ञा सि, 'आ सौ

सिलोपश्च' (कात.२/१/६४) इस सूत्र से ऋ को आ तथा सि का लोप, पिता[1] । जनक ।

*माता* मा माने (अ.२६) । माति । मा+ऋन्, त् आगम, 'आ सौ सिलोपश्च' (कात.२/१/६४) इस सूत्र से ऋ को आ तथा सि का लोप, विभक्तिकार्य, माता । जननी ।

मान पूजायाम्+तृन्, न् का लोप (वै.सि.कौ.उ.२/२५२) ।

*दुहिता* दुह प्रपूरणे (अ.६१) । प्रपूरण=दुहना, रिक्त करना । दोग्धि मातृकुलं (जो माता के परिवार का दोहन करती है) । दुह्+ऋन्, त् आगम, निपातन से इट् आगम, गुणाभाव, ऋ को आकार, विभक्तिकार्य, दुहिता । पुत्री ।

दोग्धि सर्वमर्थं पितुः सकाशात् (जो पिता के पास से सम्पूर्ण धन का दोहन करती है ।

*जामाता* जनी प्रादुर्भावे (दि.९४) । पुत्रप्रतिनिधिः जायते (जो पुत्र के प्रतिनिधि के रूप में उत्पन्न होता है) । जन्+ऋन्, निपातन से 'मत्' भाव, जन् को जा आदेश ऋ को आकार तथा लिङ्गसंज्ञा सि, सि का लोप, विभक्तिकार्य, जामाता । पुत्री का पति (दामाद) ।

जायां माति, जाया को जा आदेश, जा मा+तृच्, जामाता (वै.सि.कौ.२–२५२) । जामाता दुहितुः पत्यौ सूर्यावर्त्ते धवे पुमान् (मेदिनी.तान्त.११) ।

*भ्राता* भ्राजृ दीप्तौ (भू.५४०) । चमकना । भ्राजते । भ्राज्+ऋन्, त् आगम, जकार लोप, ऋ को आकार, विभक्तिकार्य, भ्राता ।

---

1. पा.व्या. में पितृ शब्द से अनङ् आदेश, उपधादीर्घादि करने पर 'पिता' शब्द निष्पन्न होता है किन्तु कात.व्या. में पितृ में ऋ को 'आ' करके पिता शब्द बनता है ।

भ्राजृ दीप्तौ, तृच्, जकारलोपः (वै.सि.कौ.उ.२/२५२) ।

## १०१. ऋतृसृधृञ्धम्यश्यविवृतिग्रहिभ्योऽनिः ।२–४३।

एभ्योऽनिप्रत्ययो भवति । 'ऋ गतौ' इयर्तीति *अरणिः* अग्निनिर्मन्थनकाष्ठम् । 'तॄ प्लवनतरणयोः' तरत्यनेनेति *तरणिः* नौः सूर्यो वा । 'सृ गतौ' सरतीति *सरणिः* मार्गः । 'धृञ् धारणे' धरतीति *धरणी* पृथ्वी । धम इति सौत्रोऽयं धातुः । धमतीति *धमनिः* गलशिरा । 'अश भोजने' पर्वतादीनश्नातीति *अशनिः* वज्रम् । 'अव रक्ष पालने' अवतीति *अवनिः* पृथ्वी । 'वृतु वर्तने' वर्तते *वर्तनिः* वर्तनोपकरणद्रव्यम् । 'ग्रह उपादाने' गृह्णातीति *ग्रहणिः* व्याधिविशेषः ।

ऋ, तॄ, सृ, धृ, धम्, अश्, अव्, वृत्, ग्रह् इन सभी धातुओं से अनि प्रत्यय होता है ।

***अरणिः*** ऋ गतौ (अ.७४) । इयर्ति । ऋ+अनि, ऋ को अर्, 'रषृवर्णेभ्यो' (कात.२/४/१८) से न् को ण्, लिङ्गसंज्ञा सि, विसर्ग, अरणिः । अग्नि प्राप्ति के लिए मथी जाने वाली विशेष लकड़ी । अग्नियोनि । यज्ञादि में अरणि से उत्पन्न अग्नि का प्रयोग । अरणिर्वह्निमन्थेऽपि ना द्वयोर्निर्मन्थ्यदारुणि (मेदिनी.णान्त.३४) ।

***तरणिः*** तॄ प्लवनतरणयोः (भू.२८३) । तैरना, पार जाना । तरति अनेन (जिससे तैरता है) । तॄ+अनि, ॠ को अर्, न् को ण्, विभक्तिकार्य, तरणिः । नौका तथा सूर्य । कुमारी नामक औषध । तरणिस्तरणे भानौ कुमार्योषधिनौकयोः (वि.प्र.को.णान्त.७२) ।

***सरणिः*** सृ गतौ (भू.२७४) । सरति । सृ+अनि, ऋ को अर् गुण, न् को ण्, विभक्तिकार्य, सरणिः । मार्ग । पंक्ति । सरणिः पंक्तौ मार्गे च सारणे राक्षसान्तरे (मेदिनी.णान्त.८३) ।

***धरणिः*** धृञ् धारणे (भू.५९९) । धारण करना । धरति । धृ+अनि, अर् गुण, न् को ण्, विभक्तिकार्य, धरणिः । पृथ्वी । स्त्री । भूमि ।

स्त्री. 'नदाद्यन्चि (कात.२/४/५०) इत्यादि सूत्र से ई, धरणी ।

***धमनिः*** धम (सौत्र धातु) । धमति । धम्+अनि, विभक्तिकार्य, धमनिः । गलशिरा । नाड़ी । स्त्री.–धमनी । नाडी तु धमनिः सिरा (अ.को.२/६/६५) । धमनी तु शिराहट्टविलासिन्योश्च योषिति (मेदिनी.नान्त.७९) ।

***अशनिः*** अश भोजने (क्री.४३) । पर्वतादीनश्नाति (जो पर्वत आदि को नष्ट करता है) । अश्+अनि, अशनिः । वज्र । विद्युत् । अशनिः पविविद्युतोः (वि.प्र.को.नान्त.१२३) ।

***अवनिः*** अव पालने (भू.२०२) । अवति । अव्+अनि, विभक्तिकार्य, अवनिः । पृथ्वी ।

***वर्तनिः*** वृतु वर्तने (भू.४८४) । वर्तते । वृत्+अनि, ऋ को अर्, विभक्तिकार्य, वर्तनिः । वर्तनोपकरण द्रव्य । मार्ग । देश का नाम । स्याद् वर्तनी मलिने पथि (वि.प्र.को.णान्त.१२५) ।

***ग्रहणिः*** ग्रह उपादाने (क्री.१४) । लेना, ग्रहण करना । गृह्णाति । ग्रह्+अनि, न् को ण्, विभक्तिकार्य, ग्रहणिः । व्याधिविशेष । ग्रहणी रुक् प्रवाहिका (अ.को.२/६/५५) ।

१०२. अर्चिशुचि(रुचि[1])हुसृपिछदिछर्दिभ्य इसिः ।२-४४।

एभ्यो धातुभ्य इसिप्रत्ययो भवति । इकार उच्चारणार्थः । 'अर्च पूजायाम्' अर्च्यते पूज्यते *अर्चिः* ज्वाला । 'शुच शोके' शोचति तमोऽत्र *शोचिः* दीप्तिः । 'रुच दीप्तौ' रोचते *रोचिः* सैव । 'हु दाने' हूयत इति *हविः* देवान्नम् । 'सृप्लृ गतौ' सप्त धातवः सर्पन्त्यनेनेति *सर्पिः* आज्यम् । 'छद संवरणे' रुचादित्वादिन्[2] । छादयतीति *छदिः* कुड्मलम् । कुटीरकं वा । 'छर्द वमने' छर्दते *छर्दिः* वमनम् ।

अर्च्, शुच्, रुच्, हु, सृप्, छद्, छर्द् इन धातुओं से 'इसि' प्रत्यय होता है । इसि में अन्त्य इकार उच्चारणार्थ प्रयुक्त है । 'इस्' प्रयुक्त होता है ।

*अर्चिः* अर्च पूजायाम् (भू.५१) । अर्च्यते पूज्यते (कर्म) । अर्च्+इसि, विभक्तिकार्य, अर्चिः । ज्वाला । अर्चिर्मयूखशिखयोर्न ना (मेदिनी.सान्त.१५) ।

*शोचिः* शुच शोके (भू.४४) । दुःख मानना, शोक करना । शोचति तमोऽत्र (जहाँ अन्धकार संकुचित होता है) । शुच्+इसि, गुण, विभक्तिकार्य, शोचिः । दीप्ति ।

*रोचिः* रुच दीप्तौ (भू.४७३) । चमकना । रुचना, अच्छा लगना (अभिप्रीतौ.क्षी.त.भू.४९४) । रोचते । रुच्+इसि, इ अनुबन्ध का अप्रयोग, गुण, विभक्तिकार्य, रोचिः । दीप्ति । रोचिः शोचिरुभे क्लीबे (अ.को.१/३/३४) ।

---

1. सूत्र में 'रुचि' का ग्रहण अपेक्षित है यतः वृत्ति में 'रोचिः' शब्द निष्पादित है । अतः वृत्ति में 'रोचिः' के पठित होने से सूत्र में भी 'रुचि' पाठ आवश्यक है ।
2. चुरादित्वादिन् (कात.३/२/११) ।

*हविः* हु दाने (अ.६७) । देना, आहुति देना, यज्ञ करना । हूयते (अग्नौ) । हु+इस्, गुण, अव् आदेश, विभक्तिकार्य, हविः । देवान्न । देवाज्य । हवन द्रव्य । घृत । हविर्होतव्यमात्रे च सर्पिष्यपि नपुंसकम् (मेदिनी.नान्त.४७) ।

*सर्पिः* सृप्लृ (भू.२७९) । सप्त धातवः सर्पन्त्यनेन (जिससे अन्न रस, रुधिर, मांस, चर्बी, हड्डी, मज्जा, वीर्य ये सात धातुएँ चिकनी हो जाती हैं) । सृप्+इस्, अर् गुण, विभक्तिकार्य, सर्पिः । आज्य । घृत ।

*छदिः* छद संवरणे (चु.२३) । संवरण=ढकना, आच्छादित करना । छादयति (छद् का रुचादिगण में पाठ है तथा रुचादिगण, चुरादिगण का अन्तर्गण है, अतः 'चुरादेश्च' से 'इन्' होता है) छादि+इस्, इन् का लोप, 'छादेर्घेस्मन्त्रनक्विप्सु' (कात.४/१/१९) से ह्रस्व, विभक्तिकार्य, छदिः । छादन । तृणादि से निर्मित कुटी । पटल । वर्षा तप का वारण करने वाला, (श्वेत.२–१०९) ।

*छर्दिः* छर्द वमने (चु.८४) । वमन=उल्टी करना, कय करना । छर्दयति । छर्द्+इस्, विभक्तिकार्य, छर्दिः । वमन । व्याधि ।

१०३. ज्योतिरादयः ।२–४५।

ज्योतिस् बर्हिस् इत्येवमादयः शब्दा इसिप्रत्ययान्ता निपात्यन्ते । 'द्युत शुभ रुच दीप्तौ' द्योतते *ज्योतिः* दीप्तिः । 'बृहि वृद्धौ' बृंहतीति *बर्हिः* कुशः । एवमन्येऽप्यनुसर्तव्याः ।

ज्योतिस् बर्हिस् तथा इसी प्रकार के इसि प्रत्ययान्त अन्य शब्द भी निपातन से सिद्ध होते हैं ।

*ज्योतिः* द्युत दीप्तौ (भू.४७३) । दीप्ति=चमकना, प्रकाशित होना । द्योतते । द्युत्+इस्, दकार को निपातन से जकार तथा धातु को गुण से ओकार, विभक्तिकार्य, ज्योतिः । दीप्ति । अग्नि सूर्यादि

(दया.उ.को.२/११) । ज्योतिः प्रकाशे दृशि तारकासु । ज्योतिर्दिनेशानलयोरपि स्यात् (वि.प्र.को.सान्त.४०) ।

तु.- द्युतेरिसिन्नादेश्च जः (वै.सि.कौ.उ.२/२६७) ।

*बर्हिः* बृहि वृद्धौ (भू.२४७) । धातु के इदित् होने से न् आगम । बृंहति । बृंह्+इस्, नकारलोप, ऋ को अर्, विभक्तिकार्य, बर्हिः । कुश । दर्भ । अग्नि । बर्हिस् पुंसि हुताशने न स्त्री कुशे (मेदिनी.सान्त.३६) ।

तु.- बृंहेर्नलोपश्च (वै.सि.कौ.उ.२/२६६) ।

इसी प्रकार के इसि प्रत्ययान्त शब्दों को निपातन से निष्पन्न कर लेना चाहिए । यथा- वसुरोचिः यज्ञ । भुविः समुद्र । सधिः अनड्वान् । पाथिः चक्षु, समुद्र । (वै.सि.कौ.उ.सू.२-२६८-६९-७०-७१)।

## १०४. ऋपॄवपिचक्षिजनितनिधनिभ्य उस् ।२-४६।

एभ्यः उसप्रत्ययो भवति । 'ऋ गतौ' इयर्तीति *अरुः* व्रणम् । 'पॄ पालनपूरणयोः' पृणातीति *परुः* पर्वतः । 'डु वपु बीजसन्ताने' उप्यते पुरुषार्थोऽनेनेति *वपुः* शरीरम् । 'चक्षिङ् व्यक्तायां वाचि' चष्टे हृदयाभिप्रायं चक्षुः । ख्यातेरनुपादानात् 'चक्षिङ् ख्याञ्' इति न भवति । 'जन जनने' जजन्तीति [जनुः] जर्जरिः[1] । 'तनु विस्तारे' तनोतीति *तनुः* कायः । 'धन धान्ये' धन्यते *धनुः* शरासनम् ।

ऋ, पॄ, वप्, चक्ष्, जन्, तन्, धन्, इन सभी धातुओं से उस् प्रत्यय होता है ।

1. जनुः जर्जरिः म.सं. । 'जर्जरि' अर्थ अन्य उणादि ग्रन्थों में उपलब्ध नहीं होता । इसके जनन, जन्म आदि अर्थ उपलब्ध होते हैं । जनुर्जननम् (वै.सि.कौ.उ.२/२७२) ।

*अरुः* ऋ गतौ (अ.७४) । इयर्ति । ऋ+उस्, ऋ को अर् गुण, विभक्तिकार्य, अरुः । व्रण (पु.नं.) फोड़ा । घाव । आदित्य ।

*परुः* पॄ पालनपूरणयोः (क्री.१६) । रक्षा करना, पूर्ण करना । पृणाति । पॄ+उस्, ॠ को अर् गुण, परुः । पर्वत । ग्रन्थि ।

*वपुः* डु वप बीजसन्ताने (भ्वा.६९) । बीज बोना । उप्यते पुरुषार्थोऽनेन (जिसके द्वारा पुरुषार्थ किया जाता है) । वप्+उस्, विभक्तिकार्य, वपुः । शरीर । वपुर्भव्याकृतौ देहे (वि.प्र.को.सान्त.३२) ।

*चक्षुः* चक्षिङ् व्यक्तायां वाचि (अ.४१) । स्पष्ट बोलना । चष्टे हृदयाभिप्रायम् (जो हृदय के अभिप्राय को स्पष्ट कर देता है) । चक्ष्+उस्, चक्षुः । नेत्र ।

ख्याति के अनुपादान (अग्रहण) से चक्षिङ् के स्थान पर ख्याञ् आदेश (कात.३/४/८९) नहीं होता ।

*जनुः* जन जनने (अ.८०) । जजन्ति । जन्+उस्, जनुः । जनन । जन्म । उत्पत्ति ।

*तनुः* तनु विस्तारे (त.१) । तनोति । तन्+उस्, विभक्तिकार्य, तनुः । शरीर । तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे (मेदिनी.सान्त.९) ।

*धनुः* धन धान्ये (अ.७९) । धन्यते । धन्+उस्, विभक्तिकार्य, धनुः । शरासन । धनुष । धनुः प्रियालद्रुमराशिभेदयोः शरासने चापि धनुर्धनुर्धरे (वि.प्र.को.सान्त.४०) ।

## १०५. एतेरिज्वत् ।२-४७।

अस्मादुस्प्रत्ययो भवति । स च इज्वत् । 'इण् गतौ' एतीति *आयुः* जीवितम् ।

इण् धातु से उस् प्रत्यय होता है तथा 'उस्' को इज्वद्भाव भी होता है । इज्वद्भाव होने से उपधादीर्घादि कार्य होते हैं ।

*आयुः* इण् गतौ (अ.१३) । एति । इ+उस्, धातु को गुण, तथा अयादेश, अय्+उस्, इज्वद्भाव होने से 'अस्योपधाया' (कात.३/६/५) । इस सूत्र से धातु को उपधादीर्घ, विभक्तिकार्य, आयुः । जीवन । अवस्था ।

एतेर्णिच्च, इ+उस्, णित्व से आदि वृद्धि, आय् आदेश, आयुः । (वै.सि.कौ.उ.सू.२/२७५) । आयुर्जीवितकालो ना (अ.को.२/८/१२०) ।

तु.– छन्दसीणः (दया.उ.को.१/२ आयुः) ।

## १०६. चतिकटशॄवृञ्भ्यष्ट्वरः ।२–४८।

एभ्यष्ट्वरप्रत्ययो भवति । टकारो नदाद्यर्थः । 'चते चदे च' चतते चत्वरं चतुर्णां पथां समुदायः, प्राङ्गणम् । 'कट गतौ' कटतीति *कट्वरः* दधिविकारः[1] । 'शॄ हिंसायाम्' शृणातीति *शर्वरः* । नदादित्वात् *शर्वरी* त्रियामा रात्रिः । 'वृञ् वरणे' वृणाति वृणोति वा *बर्बरः* देशविशेषः मनुष्यश्च ।

चत्, कट्, शॄ, वृञ्, इन धातुओं से ट्वर प्रत्यय होता है । 'ट्वर' में ट् अनुबन्ध नदादि के लिए प्रयुक्त है । नदादिगण में पाठ होने से 'नदाद्यन्चि' (कात.२/४/५) इत्यादि सूत्र से स्त्री. में 'ई' होता है ।

**चत्वरम्** चते याचने (भू.५७६) । चतते । चत्+ट्वर, ट् अनुबन्ध का अप्रयोग, विभक्तिकार्य, चत्वरम् । चार मार्गों का समुदाय ।

---

1. कट्वरम् उदरविकारः बं.सं. ।

चतुष्पथ । चौराहा । प्राङ्गण–आंगन । चबूतरा । चत्वरं स्थण्डिले गणे (मेदिनी.रान्त.१५२) ।

*कट्वरः* कट गतौ (भू.१०२) । कटति । कट्+ट्वर, ट् अनुबन्ध का अप्रयोग, 'घोषवत्योश्च कृति' (कात.४/६/८०) से इट् का निषेध, विभक्तिकार्य, कट्वरः । दही का विकार, भोज्य या व्यञ्जन तथा द्रव वस्तु ।

*शर्वरः* शॄ हिंसायाम् (क्री.१५) । शृणाति । शॄ+ट्वर, धातुस्थ ॠ को अर्, विभक्तिकार्य, शर्वरः । सायाह्न । चन्द्र ।

ट् अनुबन्ध के कारण स्त्री. में 'नदाद्यन्चि' (कात.२/४/५०) । इत्यादि सूत्र से ई प्रत्यय, विभक्तिकार्य, शर्वरी । रात्रि । त्रियामा ।

*बर्वरः* वृञ् वरणे (सु.८,क्री.१७) । वृणाति या वृणोति । वृ+ट्वर, ऋ को अर्, धातुघटक व् को ब, विभक्तिकार्य, बर्वरः । देशविशेष । मनुष्य । मूर्ख । अनार्य । असभ्य । प्राकृत जन । बर्वरः पामरे केशे चक्रले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियाम् (मेदिनी.रान्त.२०९) ।

## १०७. नौ सदि ।२–४९।

नावुपपदेऽस्माट्ट्वरप्रत्ययो भवति । 'षदलृ विशरणे' धात्वादेः षः सः । निपूर्वः । निषीदत्यस्मिन् लोको *निषद्वरः* कर्दमः ।

'नि' के उपपद में रहने पर सद् धातु से ट्वर प्रत्यय होता है ।

*निषद्वरः* षदलृ विशरणे (तु.६०) । विशरण=नष्ट होना, मुरझाना । निषीदति लोकः अस्मिन् (जिसमें व्यक्ति फंस जाता है) नि (पूर्वक) षद् । 'धात्वादेः षः सः' (कात.३/८/२४) सूत्र से ष् को स् । नि

सद्+ट्वर, निषद्वरः । कर्दम । कीचड़ । कन्दर्प (कामदेव) । निषद्वरस्तु जम्बालः (वै.सि.कौ.उ.सू.२/२८०) । निषद्वरः स्मरे पङ्के निशायां तु निषद्वरी (मेदिनी.रान्त.२७३) ।

## १०८. छित्वरादयः ।२–५०।

छित्वरछत्वरधीवरतीवरपीवरगह्वरचीवरनीवराः । एते ट्वर–प्रत्ययान्ता निपात्यन्ते । 'छिदिर् द्वैधीकरणे' छिनत्तीति *छित्वरः* धूर्तः । 'छद षद्द संवरणे' छादयतीति *छत्वरः* स एव । 'डु धाञ्' दधाति जालमिति *धीवरः* कैवर्तः । 'तुद व्यथने' तुदतीति *तीवरः* प्राकृतजातिविशेषः । 'पीङ् पाने' पीयते *पीवरः* स्थूलः । 'गुहू संवरणे' गूहतीति[1] *गह्वरं* गहनम् । 'चिञ् चयने' चिनोतीति *चीवरं* भिक्षुपरिधानम् । 'णीञ् प्रापणे' नयतीति *नीवरः* जलसम्भवः कश्चित् । एवमन्येऽप्यनुसर्तव्याः ।

छित्वर, छत्वर, धीवर, तीवर, पीवर, गह्वर, चीवर, नीवर, ये सभी ट्वरप्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***छित्वरः*** छिदिर् द्वैधीकरणे (रु.३) । टुकड़े करना, काटना । छिनत्ति । छिद्+ट्वर, द् को त्, गुणाभाव, विभक्तिकार्य, छित्वरः । धूर्त । दुष्ट । छित्वरो धूर्तवैरिणोः (वि.प्र.को.रान्त.१५२) । (छिदुरश्) छित्वरश्छेदने द्रव्ये धूर्ते वैरिणि च त्रिषु (मेदिनी.रान्त.१५६) ।

**छत्वरः** छद संवरणे (चु.२३) । छादयति । छद्+ट्वर, द् को त्, विभक्तिकार्य, छत्वरः । धूर्त, दुष्ट । आवरण । निर्व्याधि तथा ग्रह (श्वेत.वृ.३/१) । छत्वरो गृहकुञ्जयोः (वै.सि.कौ.ऊ.सू.३/१) ।

---

1. गुहतीति, म.सं. । गुहू धातु का गोहेरुदुपधायाः (कात.३/४/६३) सूत्र से ऊत्व होकर 'गूहति' रूप होता है । तदनुसार वृत्ति में गुहति के स्थान पर 'गूहति' पाठ किया गया ।

***धीवरः*** डु धाञ् धारणपोषणयोः (अ.८५) । दधाति जालमिति (जो जाल को धारण करता है) धा+ट्वर, निपातन से आकार को ईकार, विभक्तिकार्य, धीवरः । कैवर्त । जुलाहा । मछली मारने वाला । धीवरो नाऽम्बुधौ व्याधे (मेदिनी.रान्त.१६३) ।

***तीवरः*** तुद व्यथने (तु.१) । दुःखी होना, व्यथित होना । तुदति । तुद्+ट्वर, धातुघटक उकार को ईकार, द् का लोप, विभक्तिकार्य, तीवरः । प्राकृत जाति विशेष । म्लेच्छ जाति । शिकारी । वर्णसङ्कर ।

तायृ (पूजानिशामनयोः)+'ष्वरच्, यलोप, ईकार, तीवरः (वै.सि.कौ.उ.सू.३/२८१) ।

***पीवरः*** पीङ् पाने (दि.९) । पीयते । पी+ट्वर, ट् अनुबन्ध का अप्रयोग, अगुण, विभक्तिकार्य, पीवरः । स्थूल, मोटा । कच्छप । पीवरः कच्छपे स्थूले (मेदिनी.रान्त.१८६) ।

***गह्वरम्*** गुहू संवरणे (भू.५९५) । छिपाना, वस्त्र आदि से ढकना । गूहति । गुह्+ट्वर, निपातन से उकार के स्थान में अकार, विभक्तिकार्य, गह्वरम् । गहन । सघन । गुफा । अथ गह्वरं । गुहागहनदम्भेषु निकुञ्जे तु पुमानयम् (मेदिनी.रान्त.१४८) ।

***चीवरम्*** चिञ् चयने (सु.५) । चुनना, बटोरना । चिनोति । चि+ट्वर, इकार को दीर्घ, विभक्तिकार्य, चीवरम् । भिक्षु का वस्त्र, परिवेश । भिक्षापात्र । प्रावरण ।

***नीवरः*** णीञ् प्रापणे (भू.६००) । नयति । नी+ट्वर, निपातन से गुणाभाव, विभक्तिकार्य, नीवरः । जल से उत्पन्न कोई जन्तु । गम्भीर । परिव्राट् । स्यान्नीवरो वाणिजके वास्तव्ये च पुमानयम् (मेदिनी.रान्त.१७५) ।

इसी प्रकार की आकृति वाले ट्वर- प्रत्ययान्त अन्य शब्दों को भी निपातन से निष्पन्न कर लेना चाहिए । यथा मीवरः हिंस्र । कर्वरः व्याघ्र । संयद्वरः नृप । गर्वरः अहङ्कारी (श्वेत.वृ.२-१२४) ।

## १०९. इण्जिकृषिभ्यो नक् ।२-५१।

एभ्यो नक्प्रत्ययो भवति । ककारो यण्वद्भावार्थस्तेना-गुणत्वम् । 'इण् गतौ' एतीति *इनः* सूर्यो धनेश्वरो वा । 'जि जये' जयतीति *जिनः*[1] तीर्थङ्करो विष्णुर्वा । 'कृष विलेखने' कर्षत्यरीन् *कृष्णः* वासुदेवः ।

इण्, जि, कृष्, इन धातुओं से नक् प्रत्यय होता है । नक् में क् अनुबन्ध 'के यण्वच्च योक्तवर्जम्' (कात.४/१/७) इस सूत्र से यण्वद्भावार्थ होता है । जिससे धातु को गुण का निषेध होता है ।

*इनः* इण् गतौ (अ.१३) । एति । इण्+नक्, क् अनुबन्ध से यण्वद्भाव के कारण धातु का गुणनिषेध, विभक्तिकार्य, इनः । सूर्य या धनेश्वर । स्वामी । इनः पत्यौ नृपार्कयोः (मेदिनी.नान्त.२) ।

*जिनः* जि जये (भू.१९१) । जीतना । जयति । जि+नक्, यण्वद्भाव से गुण का निषेध, विभक्तिकार्य, जिनः । तीर्थङ्कर तथा विष्णु । बुद्ध । जयशील । नास्तिकभेद । जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे (वि.प्र.को.नान्त.१) ।

*कृष्णः* कृष विलेखने (भू.२२३) । विलेखन=खींचना, जोतना । कर्षति अरीन् (जो शत्रुओं को खींचता है) । कृष्+नक्, यण्वद्भाव से ऋ को गुण का निषेध, नकार को णकार, विभक्तिकार्य, कृष्णः । वासुदेव

---

1. जिन का 'बुद्ध' अर्थ भी होता है । अ.को. में बुद्ध के पर्यायों में जिन परिगणित है । (अ.को.१-१-१३) । जिनोऽर्हति च बुद्धे च पुंसि स्यात् जित्वरे त्रिषु (मेदिनी.नान्त.८) ।

(वसुदेवपुत्र) वर्णविशेष । कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने (मेदिनी.णान्त.७) ।

## ११०. बन्धेर्ब्रधिश्च ।२–५२।

अस्मान्नक्प्रत्ययो भवति ब्रध्यादेशश्च । इकार उच्चारणार्थः । 'बन्ध बन्धने' बध्नाति जन्तुदृष्टीः[1] ब्रध्नः सूर्यः ।

बन्ध् धातु से नक् प्रत्यय तथा बन्ध् के स्थान पर 'ब्रधि' (ब्रध्) आदेश होता है । 'ब्रधि' में इकार उच्चारणार्थ प्रयुक्त है ।

*ब्रध्नः* बन्ध बन्धने (क्री.३२) । बध्नाति जन्तुदृष्टीः (जो प्राणियों की दृष्टियों को संकुचित करता है) । बन्ध्+नक्, बन्ध् के स्थान पर ब्रध् आदेश, विभक्तिकार्य, ब्रध्नः । सूर्य । भास्कराहस्करब्रध्नप्रभाकरविभाकराः (अ.को.१/३/२८) । बुध्नो ना मूलरुद्रयोः (मेदिनी.नान्त.२०) ।

बन्धेर्बधिबुधी च–ब्रध्नः–बुध्नः (वै.सि.कौ.उ.सू.२९५) ।

## १११. धावसिद्रुभ्यो नः ।२–५३।

एभ्यो नप्रत्ययो भवति । 'डु धाञ्' धार्यन्ते *धानाः* स्त्रीत्वं बहुत्वं च भ्रष्टयवाः । 'वस निवासे' वसतीति *वस्नम्* अवक्रयणम् । 'द्रु गतौ' द्रवतीति *द्रोणः* परिमाणविशेषः अश्वत्थश्च । आम्रः पीतो वा ।

धा, वस्, द्रु, इन धातुओं से न प्रत्यय होता है ।

---

1. जन्तुदृष्टीन् म.सं. । क्तिन् प्रत्ययान्त शब्द 'दृष्टि' का द्वि. बहु. में 'दृष्टीः' शब्दरूप होता है । वृत्ति में 'दृष्टीन्' पाठ था जिसके स्थान पर 'दृष्टीः' पाठ किया गया ।

***धानाः*** डु धाञ् धारणपोषणयोः (अ.८५) । धार्यन्ते । धा+न्, स्त्री. बहु. में जस्, विभक्तिकार्य, धानाः । भ्रष्टयव । टूटे हुए यव या धान्य । भ्रष्टतण्डुलविशेष ।

***वस्नम्*** वस निवासे (भू.६१४) । वसति । वस्+न, विभक्तिकार्य, वस्नम् । मजदूरी । वेतन । मूल्य । द्रव्य, वस्त्र । ब.सं.–भ्रमण । वस्नं स्याद् वेतने मूल्ये वसनद्रव्ययोरपि (वि.प्र.को.नान्त.१२) ।

***द्रोणः*** द्रु गतौ (भू.२७९) । द्रवति । द्रु+न, गुण, नकार को णकार, विभक्तिकार्य, द्रोणः[1] । परिमाणविशेष तथा अश्वत्थ, द्रोणाचार्य । कृष्णकाक, मानविशेष । अर्जुनगुरु । आम्र या पीपल का पेड़ ।

## ११२. रास्नासास्नास्थूणावीणाः ।२–५४।

एते नप्रत्ययान्ता निपात्यन्ते । 'राशृ शब्दे' राश्यते प्राणी अनया *रास्ना* औषधविशेषः । 'शासु अनुशिष्टौ' शिष्यते[2] अनया *सास्ना* गलकम्बलः । 'ष्ठा गतिनिवृत्तौ' तिष्ठति पदार्थोऽस्यां *स्थूणा* स्तम्भः । 'वी प्रजने' सप्त स्वरान् वेति गच्छतीति *वीणा* परिवादिनी । आकारस्य ऊत्वं नस्य णत्वं भवति ।

रास्ना, सास्ना, स्थूणा, वीणा ये चारों न प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं । निपातन से शब्दस्वरूप के अनुसार कार्यों का विधान होता है ।

***रास्ना*** राशृ शब्दे (भू.४४१) । राश्यते प्राणी अनया (जिसके द्वारा मनुष्य बोलने लगता है) । राश्+न, निपातन से श् को स्, स्त्री. में

---

1. द्रोणो मानविशेषश्च काकोऽर्जुनगुरुस्तथा ।
   द्रोणः कृपीपतौ कृष्णकाके स्यादाटकेऽपि च (वि.प्र.को.णान्त.१) ।
2. शास्यते म.सं. । शास् धातु को कर्म में 'शासेरिदुपधाया अण्व्यञ्जनयोः' (कात.३/४/४८) सूत्र से इत्व होकर शिष्यते रूप होता है । अतः शास्यते के स्थान पर शिष्यते पाठ किया गया ।

आ प्रत्यय, विभक्तिकार्य, रास्ना । औषधविशेष । धेनु । गन्धद्रव्य । रास्ना च स्याद् भुजङ्गाक्ष्यामेलापर्ण्यामपि स्त्रियाम् (मेदिनी.नान्त.१७) ।

रस (श्लेषणे) +न, निपातन से सुडागम, दीर्घादि (श्वेत.वृ.३/१५) ।

*सास्ना* शासु अनुशिष्टौ (अ.३९) । शासन करना, अनुशासन करना । शिष्यते अनया । शास्+न, निपातन से श् को स्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, सास्ना । गलकम्बल । गोगलकम्बल । गाय या बैल के नीचे लटकने वाला मांसपिण्डविशेष । सास्ना तु गलकम्बलः (अ.को.२/९/६३) ।

*स्थूणा* ष्ठा गतिनिवृत्तौ (भू.२६७) । रुकना, ठहरना । तिष्ठति पदार्थोऽस्याम् (जिस पर कोई वस्तु आधारित रहती है या टिकी रहती है) । स्था+न, निपातन से धातुघटक आकार के स्थान में ऊकार, नकार को णकार, विभक्तिकार्य, स्थूणा । खम्भा । गृहस्तम्भ । स्थूणा स्यात् सूर्म्यां स्तम्भे गृहस्य च (मेदिनी.णान्त.३२) ।

*वीणा* वी प्रजनकान्त्यसनखादनेषु च (अ.१४) । प्रजन=गर्भ धारण करना, कान्ति=चाहना, असन=फेंकना, खादन=खाना, गति=जाना । सप्त स्वरान् वेति गच्छति जनयति वा (जो सात स्वरों को जन्म देती है या सात स्वरों पर जाती है) । वी+न, धातु को गुणाभाव, निपातन से नकार को णकार, स्त्री. में आ प्रत्यय, लिङ्गसंज्ञा, सि, सि का लोप, वीणा । परिवादिनी । सात तारों वाली वीणा । सितार ।

पा.उ.–अज्+न, अज् को वी भाव, अगुण, वीणा (श्वेत.वृ.३/१५) ।

वीणा वाद्यादिनोऽपायेऽप्येकदेशे गृहस्य च। (वि.प्र.को.णान्त.१०) । वीणा वल्लकिविद्युतोः (वि.प्र.को.णान्त.२७) । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी (अ.को.१/७/३) ।

११३. पातेः पः ।२–५५।

अस्मात् पः प्रत्ययो भवति । 'पा रक्षणे' पायते *पापं* दुरितम्

पा धातु से प प्रत्यय होता है ।

*पापम्* पा रक्षणे (अ.२१) । पायते (कर्म) (जिससे रक्षा की जाती है । पा+प, विभक्तिकार्य, पापम् । दुरित । मल । पुरुष ।

पाति रक्षत्यस्मादात्मानमिति पापम् (वै.सि.कौ..सू.३/३०३) ।

## ११४. नीपादयः ।२–५६।

नीपयूपसूपकूपतल्पशष्पवाष्पाः । एते पप्रत्ययान्ता निपात्यन्ते । 'णीञ् प्रापणे' नयतीति नीपः वृक्षः । 'यु मिश्रणे' यौतीति *यूपः* यज्ञकीलकः । 'षूङ् प्राणिप्रसवे' सूयते *सूपः* व्यञ्जनविशेषः । 'कुङ् शब्दे' कवते कुवते वा *कूपः* प्रथिः[1] (प्रहिः) । 'तल प्रतिष्ठायाम्' चुरादिः । तालयतीति *तल्पं* शय्या । 'शसु हिंसायाम्' शस्यते भक्ष्यते इति शष्पं बालतृणम् । 'वासृ शब्दे' वास्यते *वाष्पः* अश्रु, ऊष्मोद्‌गमश्च । एवमन्येऽप्यनुसर्तव्याः ।

नीप, यूप, सूप, कूप, तल्प, शष्प, वाष्प, ये सभी प प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

---

1. 'कूपः' के पर्यायो में 'प्रहिः' हकारघटित पाठ उपलब्ध होता है । किन्तु म.सं. में 'प्रथिः' थकारघटित पाठ है । सम्भवतः हकार के स्थान पर मुद्रण दोष से थकार हो गया हो । पुंस्येवान्धुः प्रहिः कूपः (अ.को.१९१०.२६) ।

*नीपः* णीञ् प्रापणे (भू.६००) । पहुँचाना । णो नः (कात.३/८/२५) से ण् को न् । नयति । नी+प, विभक्तिकार्य, नीपः । कदम्ब का पेड़ । नीपः कदम्बबन्धूकनीलाशोकद्रुमेष्वपि (मेदिनी.पान्त.८) ।

*यूपः* यु मिश्रणे (अ.६) । जोड़ना । यौति । यु+प, निपातन से धातुघटक उकार को ऊकार दीर्घ, विभक्तिकार्य, यूपः । यज्ञ की लकड़ी, (जो बांस या खदिर की होती है) । युवन्ति बध्नन्ति अस्मिन् पशुमिति यूपो यज्ञस्तम्भः ।

*सूपः* षूङ् प्राणिप्रसवे (दि.१) । जन्म देना, उत्पन्न करना । 'धात्वादेः षः सः' से ष् को स् । सूयते । सू+प, सूपः । व्यञ्जनविशेष । द्विदल (दाल) । सूपो व्यञ्जनसूदयोः (मेदिनी. पान्त.१२) ।

*कूपः* कुङ् शब्दे (भू.४५८) । कवते । कु+प, निपातन से धातुघटक उकार को ऊकार दीर्घ, विभक्तिकार्य, कूपः । प्रहि । बं.सं.–गम्भीरजल का आश्रय । कुवन्ति मण्डूकाः अस्मिन् कूपः (वै.सि.कौ.उ.सू.३/३०७) ।

*तल्पम्* तल प्रतिष्ठायाम् (चु.३६) । स्थापना करना । तालयति । तालि+प, 'कारितस्यानामिड्विकरणे' (कात.३/३/४४) से कारितसंज्ञक इन् का लोप, ह्रस्व, विभक्तिकार्य, तल्पम् । शय्या । तल्पन्तु शयनीये स्यात् तल्पमट्टकलत्रयोः (वि.प्र.को.पान्त.८) ।

*शष्पम्* शसु हिंसायाम् (भू.२४०) । मारना, दुःख देना । शस्यते भक्ष्यते (जिसे खाया जाता है) । शस्+प, निपातन से स् को ष्, विभक्तिकार्य, शष्पम् । छोटी नयी घास । शष्पं बालतृणे स्मृतम् । पुंसि स्यात् प्रतिभाहानौ (मेदिनी.पान्त) शष्पः स्तवे क्रियायोगे शष्पः क्रोधे बलात्कृतौ (वि.प्र.को.पान्त.१०) ।

*वाष्पम्* वासृ शब्दे (दि.१०६) । वास्यते । वास्+प, निपातन से स् को ष्, विभक्तिकार्य, वाष्पम् । अश्रु । वाष्प (भाप) का उद्गम । मुखनिःश्वास । वाष्पो नेत्रजलोष्मणोः (वि.प्र.को.पान्त.९) ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी निपातन से निष्पन्न कर लेना चाहिए । यथा– पूपम् पिष्टक (बं.सं.) । पर्पम् गृह घास ग्रीवा । रूपं शुक्ल आदि । शिष्पः कालयोग । खष्पः बलात्कार । स्तूपः समुच्छ्राय । च्यूपः मुख । वेष्पः पानीय । शिल्पम् कौशल । (वै.सि.को.उ.सू.३/३०४,५,८) ।

## ११५. इण्भीकापाशल्यर्चिकृदाधाराभ्यः कः ।२–५७।

एभ्यः कप्रत्ययो भवति । 'इण् गतौ' एतीति *एकः* असहायः । 'ञि भी भये' सर्पाद् बिभेति *भेकः* मण्डूकः । 'कै शब्दे' कायतीति *काकः* । ['पा पाने' पिबतीति *पाकः*] ['शल गतौ' शलतीति] *शल्कः* वल्कलम् । शल्यर्चिभ्याम् इट् न भवति औणादिकत्वात् । एवमन्यत्रापि उक्तवक्ष्यमाणविधौ [धिषु] प्रतिपत्तव्यम् । 'अर्च पूजायाम्' अर्चते [1]*अर्कः* रविः । 'डु कृञ् करणे' क्रियते *कल्कः* । कपिलिकादिदर्शनात् रेफस्य लत्वम् पिष्टपिण्डः । 'डु दाञ्' ददातीति *दाकः* दाता । 'डु धाञ्' धार्यते *धाकः* यज्ञः । 'रा ला दाने' रातीति राकः कर्णः । राका चन्द्रसम्पूर्णा पौर्णमासी ।

इण्, भी, कै, पा, शल्, अर्च्, कृ, दा, धा, रा, इन धातुओं से क प्रत्यय होता है । 'क' यह निरनुबन्ध प्रत्यय है ।

*एकः* इण् गतौ (अ.१३) । एति । इ+क, धातु को गुण से एकार, विभक्तिकार्य, एकः । असहाय । केवल, श्रेष्ठ । संख्यावाची । एकन्तु केवलं श्रेष्ठ इतरस्मिंश्च वाच्यवत् (वि.प्र.को.कान्त.३७) ।

1. 'अर्च' धातु के परस्मैपद होने से अर्चति होता है । कर्म में 'अर्च्यते' होगा । सम्भवतः मुद्रण दोष से 'अर्चते' हो गया हो ।

*भेकः* ञि भी भये (अ.६८) । डरना । सर्पाद् बिभेति (जो सर्प से डरता है) । भी+क, धातु को गुण एकार, विभक्तिकार्य, भेकः । मण्डूक । मेंढक । मेघ । भेको मण्डूकमेघयोः (मेषयोः) (मेदिनी.कान्त.३०) ।

*काकः* कै शब्दे (भू.२५६) । कायति । कै+क, सन्ध्यक्षरान्तानामाकारोऽविकरणे (कात.३/४/२०) इस सूत्र से ऐकार को आकार, विभक्तिकार्य, काकः । कौवा । काकः स्याद् वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । (मेदिनी.कान्त.२०) । काकं सुरतबन्धे स्यात् काकानामपि संहतौ (मेदिनी. कान्त.२२)

*पाकः* पा पाने (भू.२६४) । पिबति । पा+क, पाकः । पर्वतविशेष । श्वेत–गन्धर्वविशेष (३/४३) । बं.सं.–शिशु । पाकः शिशौ जरानिष्ठापचनक्लेदनेषु (वि.प्र.को.कान्त.३४) । पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च (मेदिनी.कान्त.२९)

*शल्कः* शल गतौ (भू.४१५) । शलति । शल्+क, शल्कः । वल्कल । मधुर वाक्, मुद्गर । शल्कं तु शकले वल्के (मेदिनी.कान्त.३५) ।

शल् एवं अर्च् धातु को इडागम नहीं होता, औणादिक हेतु से । बाहुलक भाव से विधि सूत्र भी प्रवृत्त नहीं हो पाते । इसी तरह उपर्युक्त प्रकार की (आगे) कही जाने वाली विधियों में भी समझना चाहिए ।

*अर्कः* अर्च पूजायाम् (भू.५१) । अर्च्यते । अर्च्+क, चकार का लोप[1], विभक्तिकार्य अर्कः । रवि (सूर्य) अग्नि, स्फटिक, ताम्र (ताँबा)

---

1. ति.अनु.– 'चजोः कगौ धुड्घानुबन्धयोः' इत्यनेन चकारस्य ककारः अर्कः ।

रविवार, आक (अकौवा का पौधा) । अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ (वि.प्र.को.कान्त.३७) ।

*कल्कः* डु कृञ् करणे (त.७) । क्रियते । कृ+क, ऋ को अर् तथा 'कपिलिकादेर्लोकतः सिद्धिः' (कात.३/६/९९) इस नियम से र् को ल्, विभक्तिकार्य, कल्कः । पिष्टपिण्ड । तैलादिविशेष (खली) पाप, मैल, विष्ठा, कपट, अहङ्कार । कल्कोऽस्त्री घृततैलादिशेषे दम्भे बिभीतके । विटविट्टयोश्च पापे च त्रिषु पापाशये पुनः । (मेदिनी.कान्त.१९) ।

*दाकः* डु दाञ् दाने (अ.८४) । देना । ददाति । दा+क, विभक्तिकार्य, दाकः । दाता । यजमान ।

*धाकः* डु धाञ् धारणपोषणयोः (अ.८५) । धार्यते (कर्म) । धा+क, विभक्तिकार्य, धाकः । यज्ञ । बैल । आधार ।

*राकः* रा दाने (अ.२२) । लेना । राति । रा+क, विभक्तिकार्य, राकः । कर्ण । राका तु सरिदन्तरे कच्छूनवरजकन्यापूर्णेन्दुपूर्णिमासु च (वि.प्र.को.कान्त.४७) ।

स्त्री.- राका । पूर्ण चन्द्रमा से युक्त पूर्णिमा तिथि ।

## ११६. मूकादयः ।२–५८।

मूकयूकार्भकपृथुकवृकसृकभूकाः । एते कप्रत्ययान्ता निपात्यन्ते । 'मूङ् बन्धने' मूयते *मूकः* जडः । 'यु मिश्रणे' यूयते *यूका* क्षुद्रजन्तुः । 'अर्ह मह पूजायाम्' अर्हतीति *अर्भकः* शिशुः । 'प्रथ प्रख्याने' प्रथयतीति *पृथुकः* स एव । 'वृञ् आवरणे' वृणोतीति *वृकः* मृगविशेषः । 'सृ गतौ' सरतीति *सृकम्* उत्पलमूलम् । 'भू सत्तायाम्' भवतीति *भूकं* छिद्रम् ।

मूक, यूक, अर्भक, पृथुक, वृक, सृक, भूक, ये सभी क प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं । शब्दों की प्रकृति के अनुसार कार्यों की कल्पना कर ली जाती है ।

*मूकः* मूङ् बन्धने (भू.४६६) । बाँधना । मूयते (कर्म) । मु+क, विभक्तिकार्य, मूकः । जड । वाणीरहित । मूकोऽप्यवाङ्मतौ दीने (वि.प्र.को.कान्त.३६) मूकस्त्ववचि ना दैत्ये (मेदिनी.कान्त.३१) ।

*यूका* यु मिश्रणे (अ.६) । जोड़ना, मिलना । यूयते । यु+क, निपातन से ऊकार, स्त्री. में 'स्त्रियामादा' सूत्र से आ प्रत्यय, विभक्तिकार्य, यूका । क्षुद्रजन्तु । कृमि । लिक्ष (लीख, जुवां) ।

*अर्भकः* अर्ह पूजायाम् (भू.२५०) । अर्हति । अर्ह्+क, ह् को भ, तथा अकारागम, विभक्तिकार्य, अर्भकः । शिशु (बाल) । अर्भकः कथितो बाले मूर्खेऽपि च कृशेऽपि च (मेदिनी.कान्त.४७) ।

*पृथुकः* प्रथ प्रख्याने (चु.३९, भू.४९) । प्रख्यान=प्रसिद्ध होना । प्रथयति । प्रथ्+क, र को सम्प्रसारण तथा उकारागम, विभक्तिकार्य, पृथुकः । बाल । पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवत् (मेदिनी.कान्त.१२६) ।

पा.उ. ऋधु वृद्धौ अतो वुन् भकारश्चान्तादेशः (वै.सि.कौ.उ.सू.५/७३१) ।

*वृकः* वृञ् वरणे (सु.८) । वृणोति । वृ+क, गुणाभाव, विभक्तिकार्य, वृकः । मृगविशेष । भेड़िया । काकविशेष । श्वापद । कुत्ते के आकार वाला व्याघ्रविशेष । सूर्य ।

*सृकः* सृ गतौ (भू.२७४) । सरति । सृ+क, निपातन से गुणाभाव, विभक्तिकार्य, सृकः । कमल की जड़ । शर, निरामय, वाणी, वज्र वायु (दया.उ.को.३-४१) ।

*भूकम्* भू सत्तायाम् (भू.१) । सत्ता=होना, रहना । भवति । भू+क, धातु को गुण का निषेध, विभक्तिकार्य, भूकम् छिद्र । भूकं जलनिर्गमविवरम् (उज्ज्वल.३-४१) । भूकं छिद्रे च कीले च (मेदिनी.कान्त.३०) ।

## ११७. शक्केरुन्युन्तौ[1] ।२-५९।

अस्माद् उनि उन्त इत्येतौ प्रत्ययौ भवतः । 'शक्लृ शक्तौ' नभसा गन्तुं शक्नोतीति *शकुनिः* पक्षी । एवं *शकुन्तः* स एव ।

शक् धातु से उनि एवं उन्त ये दोनों प्रत्यय होते हैं । बं.सं. एवं पा.उ. में शक् धातु से उनि, उन्त, उन, उन्ति ये चार प्रत्यय विहित हैं ।

*शकुनिः* शक्लृ शक्तौ (सु.१५) । समर्थ होना, जा सकना । नभसा गन्तुं शक्नोति (जो आकाश मार्ग से जा सकता है) । शक्+उनि, विभक्तिकार्य, शकुनिः । पक्षी ।

शक्+उन्त, शकुन्तः । मास । पक्षी ।

बं.सं.-शक्+उन, शकुनः । शुभाशंसा (सगुन)

शक्+उन्ति, शकुन्तिः । शकुनञ्च शुभाशंसानिमित्ते शकुनः खगे (वि.प्र.को. नान्त.४६) ।

## ११८. ऋकृतृवृञ्यमिदार्यर्जिभ्य उनः ।२-६०।

एभ्य उनप्रत्ययो भवति । ऋ गतौ इयर्तीति *अरुणः* सूर्यसारथिः । 'डु कृञ करणे' क्रियते *करुणा* कृपा । 'तृ

---

1. शकेरुन्युन्त्युनोन्ताः, उनि-उन्ति-उन-उन्त प्रत्ययाः (बं.सं.सु.२-११९) । शकेरुनोन्तोन्त्युनयः (श्वेत.वृ.३/४८) ।

प्लवनतरणयोः' क्रियां कर्तुं तरति शक्नोतीति *तरुणः* युवा । 'वृञ् वरणे' वृणोतीति *वरुणः* पश्चिमदिक्पतिः । 'यम उपरमे' यच्छतीति *यमुना* कालिन्दी नदी । 'दॄ विदारणे' हेताविन् । दारयतीति *दारुणः* रौद्रः । 'अर्ज सर्ज अर्जने' अर्जतीति *अर्जुनः* वृक्षः पाण्डवश्च ।

ऋ, कृ, तॄ, वृञ्, यम, दॄ, अर्ज् इन धातुओं से 'उन' प्रत्यय होता है ।

***अरुणः*** 'ऋ गतौ' (अ.७४) । इयर्ति । ऋ+उन, ऋ को अर्, नकार को णकार, विभक्तिकार्य, अरुणः । सूर्य का सारथि । सूर्य, कुष्ठ, या रक्त, सन्ध्याकालीन लालिमा ।

अरुणो व्यरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निःशब्दे कपिले कुष्ठे, द्रव्ये वाच्यवदिष्यते । (वि.प्र.को. णान्त.२८)

***करुणा*** डु कृञ् करणे (त.७) । क्रियते । कृ+उन, ऋ को अर्, नकार को णकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, करुणा । कृपा । दया । करुणस्तु रसे वृक्षे कृपायां करुणा मता (वि.प्र.को. णान्त.३०) ।

***तरुणः*** तॄ प्लवनतरणयोः (भू.२८३) । पार जाना, तैरना । तरति । तॄ+उन, ॠ को अर्, नकार को णकार, विभक्तिकार्य, तरुणः । युवा । वृक्षभेद । तरुणः स्यान्नवे यूनि कुब्जपुष्पोरुबूकयोः (वि.प्र.को.णान्त.३२) ।

***वरुणः*** वृञ् वरणे (सु.८) । वृणोति । वृ+उन, गुण से अर्, नकार को णकार, विभक्तिकार्य, वरुणः[1] । पश्चिम दिशा का स्वामी । वृक्ष । वरुणस्तरुभेदेऽप्सु पश्चिमाशापतावपि (मेदिनी.णान्त.६५) ।

1. वरुणः सम्मतो नीरे स्वर्लोके परमेष्ठिनि ।
वरुणस्तरुभेदेऽप्सु प्रतीचीपतिसूर्ययोः ॥ (वि.प्र.को.णान्त.३०–३१) ।

***यमुना*** यम उपरमे (भू.१५८) । उपरम=रोकना, अवरोध करना । यच्छति । यम्+उन, स्त्री. में आ प्रत्यय, विभक्तिकार्य, यमुना । कालिन्दी नदी । कालिन्दी सूर्यतनया यमुना शमनस्वसा (अ.को.१/१०/३२) ।

***दारुणः*** दॄ विदारणे (क्री.१९) । काटना । दॄ को 'धातोश्च हेतौ' (कात.३/२/१०) से हेतु में इन् । दारयति । दारि+उन, 'कारितस्यानामिड् विकरणे' (कात.३/६/४४) से इन् का लोप, नकार को णकार, विभक्तिकार्य, दारुणः । रौद्र । निष्ठुर । क्रूरात्मा । दारुणो रसभेदे ना त्रिषु तु स्याद् भयावहे (मेदिनी.णान्त.५२) ।

***अर्जुनः*** अर्ज अर्जने (भू.६५) । संग्रह करना, अर्जित करना । अर्जति । अर्ज्+उन, नकार को णकार, विभक्तिकार्य, अर्जुनः[1] । वृक्ष तथा पाण्डव ।

## ११९. पिशुनफाल्गुनौ ।२–६१।

एतौ उनप्रत्ययान्तौ निपात्येते । 'पिष्लृ संचूर्णने' पिनष्टीति । *पिशुनः* सूचको दुर्जनश्च 'फल निष्पत्तौ' फलतीति *फाल्गुनः* मासविशेषः अर्जुनश्च ।

पिशुन, फाल्गुन ये दोनों उन प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***पिशुनः*** पिष्लृ संचूर्णने (रु.१२) । संचूर्णन=पीसना । पिनष्टि । पिष्+उन, गुणाभाव, ष् को श्, विभक्तिकार्य, पिशुनः[2] । सूचक (निन्दक) । पिशुनौ खलसूचकौ (अ.को.३–१२७) ।

---

1. अर्जुनः ककुभे पार्थे, कार्तवीर्यमयूरयोः ।
   मातुरेकसुते च स्यादर्जुनो धवलेऽन्यवत् ॥ (वि.प्र.को.नान्त.८४) ।
2. पिशुनः कपिवक्त्रे स्यात् स्पृक्कायां पिशुना मता ।
   पिशुनं कुङ्कुमे क्रूरे, सूचके चाभिधेयवत् ॥(वि.प्र.को.नान्त.४५–४६) ।

*फाल्गुनः* फल निष्पत्तौ (भू.१७६) । निष्पत्ति=फलना, उत्पन्न होना । फलति । फल्+उन, निपातन से ग् अन्तादेश, धातु को उपधादीर्घ, विभक्तिकार्य, फाल्गुनः[1] । १२वाँ मास । अर्जुन ।

## १२०. कृधूवाभ्यःसरक्[2] ।२-६२।

एभ्यः सरक्प्रत्ययो भवति । को यण्वत् । तेनागुणत्वम् । 'डु कृञ् करणे' करोतीति *कृसरा* यवागूः । 'धू विधूनने' धुवतीति *धूसरः* अग्निस्निग्धः । 'वा गतिगन्धनयोः' वातीति *वासरः* दिवसः ।

कृ, धू, वा, इन धातुओं से सरक् प्रत्यय होता है । बं.सं. में मदी धातु से भी सरक् प्रत्यय विहित है । क् अनुबन्ध से यण्वद्भाव तथा उससे गुण का निषेध होता है ।

*कृसरा* डु कृञ् करणे (त.७) । करोति । कृ+सरक्, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, स्त्री. में आ प्रत्यय, विभक्तिकार्य, कृसरा । यवागू खिचड़ी (तिल तण्डुल तथा दाल का मिश्रित पाक) ।

*धूसरः* धू विधूनने (तु.१०५) । विधूनन=कम्पित करना, काँपना । धुवति । धू+सरक्, गुणाभाव, विभक्तिकार्य, धूसरः । धूल से लिपटा हुआ । अग्नि । धूसरः पाण्डुरे खरे (वि.प्र.को.रान्त.१३२) । ईषत्पाण्डुस्तु धूसरः (अ.को.१-५-१३) ।

---

1. उत्तराभ्यां फाल्गुनीभ्यां नक्षत्राभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे, तेन मां फाल्गुनं विदुः॥ (महा.विराट.३९-१४) ।
2. पाठा.- कृधूवामदिभ्यः सरक् (बं.सं) कृधूमदिभ्यः कित् (वै.सि.कौ.उ.३/३५३) ।

***वासरः*** वा गतिगन्धनयोः (अ.१७) । जाना, गन्ध देना । वाति । वा+सरक्, वासरः । दिन । दिवसे रागप्रभेदेऽपि च वासरः (वि.प्र.को.रान्त.१६४) ।

## १२१. भीशीङ्भ्यामानकः ।२–६३।

आभ्यामानकः प्रत्ययो भवति । 'ञि भी भये' भीयतेऽस्मिन्निति[1] (अस्मादिति) *भयानकः* भीष्मः । 'शीङ् स्वप्ने' शेते *शयानकः* अजगरः ।

***भयानकः*** 'ञि भी भये' (अ.६८) । भीयते अस्मात् (जिससे डरता है) । भी+आनक, गुण, अयादेश, विभक्तिकार्य, भयानकः । भीष्म । मयूर । भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे । (मेदिनी.कान्त.२०६) ।

***शयानकः*** शीङ् स्वप्ने (अ.५५) । शेते । शी+आनक, गुण से एकार तथा एकार को अय् आदेश, विभक्तिकार्य, शयानकः । अजगर ।

## १२२. शिङ्घेराणकः ।२–६४।

अस्मादाणकप्रत्ययो भवति । 'शिघि आघ्राणे' इदनुबन्धत्वान्नागमः । *शिङ्घाणकः* नासामलः ।

शिङ्घ् धातु से आणक प्रत्यय होता है ।

***शिङ्घाणकः*** शिघि आघ्राणे (भू.४३) । सूँघना । इदनुबन्ध सहित होने से न् आगम । शिङ्घति । शिङ्घ्+आणक, विभक्तिकार्य,

---

1. भी धातु से 'भीयते अस्मिन्' ऐसी अधिकरण व्युत्पत्ति असङ्गत है । यतः 'भीमादयोऽपादाने (कात.४/६/५१) सूत्र से भी अपादान व्युत्पत्ति का निर्देश है । अतः 'भीयते अस्मात्' ऐसी अपादान व्युत्पत्ति अपेक्षित है ।

शिङ्घाणकः । नासामल । नाक के अन्दर रहने वाला मैल । श्लेष्मा ।

पृषोदरादित्वात् पक्षे कलोपः शिङ्घाणं नासिकामले (वै.सि.कौ.उ.३६३) । शिङ्घाणं काचपात्रे स्याल्लोहनासिकयोर्मले । (वि.प्र.को.णान्त.५३) ।

---

[1]वातेरायसः (बं.सं.सू.२–१२५)

अस्मादायसः परो भवति । 'वा गतिगन्धनयोः' *वायसः* काकः ।

वाः धातु से आयस प्रत्यय होता है ।

***वायसः*** वा गतिगन्धनयोः (अ.१७) । जाना, गन्ध देना । वाति । वा+आयस, वायसः । काक (कौवा) ।

वय गतौ; असच्, णित्, उपधावृद्धिश्च (श्वेत.वृ.३/११३) वायसोऽगुरुवृक्षे च श्रीवासध्वाङ्क्षयोः पुमान् (मेदिनी.सान्त.३८) ।

सूतेश्चकः (बं.सं.सू.२–१२६)

अस्मात् चकपरो भवति । 'षूङ् प्राणिगर्भविमोचने' सूचकः ।

सूच् धातु से चक प्रत्यय होता है ।

---

1. ये दोनों सूत्र मद्रास संस्करण में उपलब्ध नहीं हैं । बङ्ग संस्करण के आधार पर दिए गए हैं ।

*सूचकः* षूङ् प्राणिगर्भविमोचने (अ.५४) । सू+चक, विभक्तिकार्य, सूचकः । निन्दक । सूचकः सीवनद्रव्ये बोधके पिशुने शुनि (मेदिनी.कान्त.१६९) ।

---

### १२३. इषेः किकः[1] (कीकः) ।२–६५।

अस्मात् किक(कीक)प्रत्ययो भवति । को यण्वद्भावार्थः । 'इषु इच्छायाम्' इच्छतीति *इषिका* (इषीका) विरुणी[2]शलाका ।

इष् धातु से कीक प्रत्यय होता है । 'कीक्' में पूर्व ककार अनुबन्ध है, जिससे यण्वद्भाव होता है ।

*इषीका* इषु इच्छायाम् (तु.७०) । इच्छति । इष्+कीक्, क् अनुबन्ध से यण्वद्भाव के कारण धातु को गुण का निषेध, विभक्तिकार्य, इषीका । वीरणशलाका । गाँडर घास । शलाका ।

ईष्+ईकन्, इषीका, (वै.सि.कौ.उ.४/४६१) ।

### १२४. तिन्तिडि(डी)कादयः[3] ।२–६६।

तिन्तिडि(डी)का किङ्किणि(णी)का [जर्जरि(री)का] पर्परि(री)का मृद्वि(द्वी)का एते कि(की)क[4]प्रत्ययान्ता निपात्यन्ते । तिम आर्द्रीभावे तिम्यतीति *तिन्तिडि(डी)का* तिलवृक्षविशेषः ।

---

1. पाठा. कीक । बं.सं. में भी 'कीक' पाठ है । इससे ईकारघटित 'इषीका' उदाहरण होता है । पञ्चपादी में भी 'ईषेः किद् ध्रस्वश्च' (४/४६१) ऐसा पाठ है, इससे 'ईकन्' होता है ।
2. विरुणी मं.सं. । विरुणी शब्द के स्थान पर 'वीरणी' पाठ मिलता है । स्याद् वीरणं वीरतरं (अ.को.२/४/१६४) ।
3. पाठा. तिन्तिडीकादयः बं.सं. । सरस्वती.२–२–२०, दया.उ.को.४–२० ।
4. 'कीकन्' पञ्चपादी उणादिवृत्तियों में 'कीकन्' प्रत्ययान्त सभी शब्द तिन्तिडीका, जर्जरीका आदि प्राप्त होते हैं ।

'कण क्वण शब्दे' किम्पूर्वः । किङ्कणतीति *किङ्किणि(णी)का* । 'जॄ वयोहानौ' जीर्यते इति *जर्जरि(री)का* बहुच्छिद्रा । 'पॄ पालनपूरणयोः' पृणातीति *पर्परि(री)का* मर्दलः । 'मृद क्षोदे' मृद्नातीति *मृद्वि(द्वी)का* । एवमन्येऽपि ।

तिन्तिडिका, किङ्किणिका, जर्जरिका, पर्परिका, मृद्विका ये सभी किकप्रत्ययान्त शब्द निपातन से सिद्ध होते हैं । ऐसा दु.वृ. में प्रतिपादित है किन्तु यहाँ विशेष ध्यातव्य यह है कि अन्य उणादि ग्रन्थों में 'कीकन्' प्रत्ययान्त घटित होने से तिन्तिडीका, किङ्किणीका, जर्जरीका, पर्परीका मृद्वीका शब्द ईकार घटित निष्पादित होते हैं । यही पाठ उचित भी है ।

*तिन्तिडीका* तिम आर्द्रीभावे (दि.१४) । गीला करना, भिगाना । तिम्यति । तिम्+कीक, धातु को द्वित्व, तथा निपातन से मकार को डकार[1], म् को अनुस्वार तथा तवर्गीय पञ्चम वर्ण, स्त्रीत्व विवक्षा में आ प्रत्यय, विभक्तिकार्य, तिन्तिडीका । तिल का वृक्ष । आम्ल वृक्ष । वृक्षजाति । शाक जाति ।

तिम्+कीकन्, तिंन्तिडीकः (वै.सि.कौ.उ.४/४६०) ।

*किङ्किणीका* कण शब्दे (भू.१४६) । किम् पूर्वक । किङ्कणति । किम् कण्+कीक, निपातन से कण में ककारघटक अकार को इकार, स्त्रीत्व-विवक्षा में आ प्रत्यय, विभक्तिकार्य, किङ्किणीका । क्षुद्रघण्टिका । घुंघरू । सूक्ष्मघण्टिका । किम् कण्+कीकन् किङ्कणीका ।

चङ्कणः कङ्कणश्च । कण शब्दे, अस्माद् यङ्लुगन्तात् ईकन् धातोः कङ्कणादेशश्च । घण्टिकायां कङ्कणीका सैव प्रतिसराऽपि च (वै.सि.कौ.उ.३०४/४५८) ।

---

1. तिमेस्तिडागमः ति.अनु. ।

*जर्जरीका* जॄ वयोहानौ (क्री.२०) । जीर्ण होना, वृद्ध होना । जीर्यते । जॄ+कीक, धातु को द्वित्व, अर्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, जर्जरीका । बहुत छिद्रों वाली जीर्ण वस्तु । जर्जरीकं बहुच्छिद्रं जरातुरेऽपि वाच्यवत् (मेदिनी.कान्त.१९०) ।

*पर्परीका* पॄ पालनपूरणयोः (क्री.१६) । पृणाति । पॄ+कीक, द्वित्व, अर्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, पर्परीका । मर्दल । वाद्य (एक प्रकार का ढोल) सूर्य, अग्नि, जलाशय (दश.वृ.३/३७) पर्परीको दिवाकरः (वै.सि.कौ.उ.४/४५९) ।

*मृद्वीका* मृद क्षोदे (क्री.३७) । क्षोद=कूटना, पीसना । मृद्नाति । मृद्+कीक, निपातन से वान्तादेश, स्त्री. में आ प्रत्यय, मृद्वीका । द्राक्षा (अंगूर की बेल या गुच्छा) । मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च (अ.को.२/४/१०७) ।

इसी प्रकार की आकृति वाले किक या कीक प्रत्ययान्त शब्दों को निपातन से सिद्ध कर लेना चाहिए ।

यथा– कषीका पक्षिजाति । दूषीका नेत्रमल । अनीकम् विरुद्ध सैन्य । हृषीकम् ज्ञानेन्द्रिय । शर्शरीकः हिंसक । वर्वरीकः कुटिल केश जन । फर्फरीकम् पत्रादिसहित शाखा या ग्रन्थि । दर्दरीकम् वादित्र । कर्करीकम् शरीर । चञ्चरीकः भ्रमर । मर्मरीकः हीनजन । पुण्डरीकम् श्वेत कमल सितपत्र, व्याघ्र, अग्नि । मृडीकः सुखदाता, मृग । अलीकम् मिथ्या । व्यलीकम् अप्रिय, या खेद । वलीकम् गृहाच्छादनसामग्री । वल्मीकम् छिद्र या ऋषि भेद । तस्यापत्यं वाल्मीकिः । सुप्रतीकः अग्नि ।

१२५. घृसिदूभ्यः क्तः ।२-६७।

एभ्यः क्तप्रत्ययो भवति । 'घृ क्षरणदीप्त्योः' घरतीति[1] *घृतं* सर्पिः । 'षिञ् बन्धने' सिनोतीति *सितः* शुक्लः । 'दूङ् परितापे' दूयते *दूतः* सङ्गमकारकः । ककारो यण्वद्भावार्थः । तेनागुणत्वम् ।

घृ, सि, दू इन धातुओं से क्त प्रत्यय होता है । 'क्त' में क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है ।

*घृतम्* घृ क्षरणदीप्त्योः (अ.७२) । टपकना, चमकना । जिघर्ति । घृ+क्त, क् अनुबन्ध से यण्वद्भाव तथा गुणनिषेध, विभक्तिकार्य, घृतम् । सर्पि । घी । घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् (मेदिनी.तान्त.१७) । त्रिष्वप्सु च घृतामृते (अ.को.३/३/७५) ।

*सितः* षिञ् बन्धने (सु.२) । बाँधना । सिनोति । 'धात्वादेः षः सः' से ष् को स् । सि+क्त, क् अनुबन्ध से यण्वद्भाव के कारण गुणनिषेध, विभक्तिकार्य, सितः । शुक्ल (सफेद) । सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री. । (मेदिनी.तान्त.७१) ।

*दूतः* दूङ् परितापे (दि.८२) । दुःख से जर्जर होना, दुःख सहना । दूयते । दू+क्त, गुणनिषेध, विभक्तिकार्य, दूतः । सङ्गमकारक । राजभृत्य । स्यात् सन्देशहरो दूतः (अ.को.२/८/१६) ।

---

1. वर्तमान उपलब्ध धातुपाठ के अनुसार घृ धातु क्षरण अर्थ में भौवादिक है । क्षरण एवं दीप्ति अर्थ में (अ.७२) आदादिक है । आदादिक होने से इसका जिघर्ति रूप होगा । भौवादिक 'घृ क्षरणे' से घरति रूप होगा । वृत्ति में आदादिक घृ पठित होने से घरति के स्थान पर 'जिघर्ति' पाठ होना चाहिए ।

## १२६. जर्ततातपलितसुरतलोष्टाः ।२-६८।

एते क्तप्रत्ययान्ता निपात्यन्ते । 'जृषु झृषु' जीर्यते *जर्तः* दीर्घरोमा । 'दैङ् त्रैङ् पालने' सन्ध्यक्षरान्तानामात्वम् । त्रायते *तातः* पिता । 'डु पचष् पाके' पच्यते पलितं पक्वकेशाः । 'रमु क्रीडायाम्' सुपूर्वः । सुखाय रम्यते *सुरतं* मैथुनम् । 'लूष हिंसायाम्' चुरादिः । लूषयतीति *लोष्टः* मृत्पिण्डः ।

जर्त, तात, पलित, सुरत, लोष्ट ये सभी क्तप्रत्ययान्त शब्द निपातन से सिद्ध होते हैं । क्त में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है ।

*जर्तः* जृष वयोहानौ (दि.१८) । जीर्ण होना, वृद्ध होना । जीर्यति । जृ+क्त, जृ घटक ॠ को यण्वद्भाव होने से गुणनिषेध होने पर भी निपातन बल से अर् गुण, विभक्तिकार्य, जर्तः । दीर्घरोमा । लम्बे रोयें वाला । योनि तथा रोम ।

*तातः* त्रैङ् पालने (भू.४६३) । रक्षा करना । त्रै में ऐकार को 'सन्ध्यक्षरान्तानामाकारोऽविकरणे (कात.३/४/२०) । इस सूत्र से आकार । त्रायते । त्रा+क्त, निपातन से त्रा में र् का लोप, विभक्तिकार्य, तातः । पिता । तातोऽनुकम्प्ये ताते (वि.प्र.को.तान्त.१४) । तनोति निषेकादिक्रियाजातम् इति तातः (श्वेत.वृ.३-८६) ।

*पलितम्* डु पचष् पाके (भू.६३) । पकाना । पच्यते । पच्+क्त, निपातन से च् को ल, तथा इत्व, विभक्तिकार्य, पलितम् । पके हुए केश (सफेद बाल) । बं.सं.-पङ्कविशेषः । पलितं शैलजे तापे केशपाके च कर्दमे (मेदिनी.तान्त.१२३) ।

*सुरतम्* रमु क्रीडायाम् (भू.५६१) । क्रीडा करना, विहार करना । सुपूर्वक । सुखाय रम्यते (सुख के लिए रमण करता है ) । सु

(पूर्वक) रम्+क्त, म् का लोप, विभक्तिकार्य, सुरतम् । मैथुन । बं.सं. सुखोपभोग । सुरतं स्यान्निधुवने देवत्वे सुरता स्मृता (मेदिनी.तान्त.१७२) ।

*लोष्टः* लूष हिंसायाम् (चु.५२) । लूषयति । लूषि+क्त, निपातन बल से गुण, कारितस्यानामिड् विकरणे (कात.३/६/४४) से इन् का लोप, तथा त् को ट् विभक्तिकार्य, लोष्टः । मिट्टी का ढेला । बं.सं.–शुष्कमृत्पिण्ड ।

लुष्+ट, लोष्ट (सरस्वती.२/२/९४) । लूञ्–छेदने, क्तः, सुट्, गुणः, लोष्टम् (वै.सि.कौ.उ.३७२) ।

## १२७. स्पृहेराय्यः ।२–६९।

अस्मादाय्यप्रत्ययो भवति । 'स्पृह ईप्सायाम्' चुरादित्वादिन् । स्पृहयतीति *स्पृहयाय्यं* गवीनं घृतं वा ।

॥ इति दौर्गसिंह्या(सिम्ह्या)मुणादिवृत्तौ द्वितीयः पादः ॥

*स्पृहयाय्यम्* स्पृह ईप्सायाम् (चु.१८९) । ईप्सा=चाहना । स्पृहयति । स्पृह् को 'चुरादेश्च' (कात.३/२/११) सूत्र से इन्, अय् । स्पृहि+आय्य, 'नाल्विष्ण्वाय्यान्तेत्नुषु' (कात.३/२/११) इस सूत्र से कारितसंज्ञक इन् के लोप का अभाव, गुण, अयादेश, विभक्तिकार्य, स्पृहयाय्यम् । गवीन या घृत । नक्षत्र तथा अग्नि (श्वेत.वृ.३–९०) । अभीप्सु ।

(दुर्गसिंह कृत उणादिवृत्ति के द्वितीय पाद की हिन्दी टीका समाप्त)

## ॥अथ तृतीयः पादः॥

### १२८. वृञ एण्यः[1] ।३–१।

अस्मादेण्यप्रत्ययो भवति । 'वृञ् वरणे' वृणोतीति *वरेण्यः* श्रेष्ठः ।

वृञ् धातु से एण्य प्रत्यय होता है । 'वृञः' यह पञ्चम्यन्त निर्देश है ।

***वरेण्यः*** वृञ् वरणे (सु.८) । वरण=पसन्द करना, वरण करना । वृणोति । वृ+एण्य, ऋ को अर् गुण, विभक्तिकार्य, वरेण्यः । श्रेष्ठ । प्रजापति । अग्नि । अन्न । प्रधान । परंब्रह्मधाम (दश.वृ.८/३) ।

### १२९. अर्तेरन्यः ।३–२।

अस्मादन्यप्रत्ययो भवति । 'ऋ गतौ' अर्यते*अरण्यं* वनम् ।

ऋ धातु से अन्य प्रत्यय होता है ।

***अरण्यम्*** ऋ गतौ (अ.७४) । अर्यते (कर्म) । ऋ+अन्य, ऋ को अर् तथा न् को ण्, विभक्तिकार्य, अरण्यम् । वन ।

न गच्छति अस्मिन्निति अरण्यम् (प्र.सर्व.३–१०१) । अर्यते तन्मृगश्वापदैरिति अरण्यम् निर्जनस्थानम् (दश.वृ.८/६) ।

### १३०. हो हिरश्च ।३–३।

अस्मादन्यप्रत्ययो भवति हिरादेशश्च । 'ओ हाक् त्यागे' हीयते *हिरण्यं* सुवर्णम् ।

---

1. पन्यः (बं.सं.) ।

हा धातु से अन्य प्रत्यय होता है, तथा हा के स्थान में 'हिर्' आदेश होता है ।

***हिरण्यम्*** ओ हाक् त्यागे (अ.७१) । हीयते (कर्म) । हा+अन्य, हा के स्थान में हिर् आदेश, न् को ण्, विभक्तिकार्य, हिरण्यम् । सुवर्ण ।

पा.उ. हर्यतेः कन्यन् हिर् च (दया.उ.को.५/४४) । हर्य+कन्यन्, हिर् आदेश, हिरण्यम् । हर्यति गच्छति इति हिरण्यम् (श्वेत.वृ.५/४९) । हिरण्यं रेतसि द्रव्ये शातकुम्भवराटयोः । अक्षये मानभेदे स्यादकुप्ये च नपुंसकम् । (मेदिनी.यान्त.११४) ।

## १३१. पर्जन्यपुण्ये ।३-४।

एतौ अन्यप्रत्ययान्तौ निपात्येते । 'पृची सम्पर्के' पृङ्क्ते पृणक्ति वा *पर्जन्यः* इन्द्रः । 'पुण[1] शोभे' पुणतीति *पुण्यं* धर्मकर्म[2] ।

पर्जन्य एवं पुण्य ये दोनों अन्य प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***पर्जन्यः*** पृची सम्पर्के (अ.५३, रु.२१) । सम्पर्क करना, स्पर्श करना, छूना । पृङ्क्ते या पृणक्ति । पृच्+अन्य, ऋ को अर् गुण, च् को ज्, विभक्तिकार्य, पर्जन्यः । इन्द्र । मेघशब्द । पर्जन्यो मेघशब्देऽपि ध्वनदम्बुदशक्रयोः (मेदिनी.यान्त.९१) ।

पृष्+अन्यः, निपातनात् षकारस्य जकारः (दया.उ.को.३/१०३) ।

1. पुणो णकारस्य अन्यस्य (प्रत्ययस्य) च अकारस्य लोपः गुणाभावो णत्वञ्च (बं.सं. ३-१३५) ।
2. शुभकर्म (ति.अनु.३-२) ।

***पुण्यम्*** पुण शुभे (तु.४५) । पवित्र होना, शुद्ध होना । पुणति । पुण्+अन्य, प्रत्ययघटक अकार तथा नकार का निपातन से लोप, विभक्तिकार्य, पुण्यम् । धर्मकार्य । सुकृत । शुभ । पुण्यं शोभने त्रिषु । क्लीबं धर्मे च सुकृते (मेदिनी.यान्त.३७) ।

पूञ् (पवने)+अन्य, ह्रस्व, अलोप, अगुण णत्व, (बं.सं.) पूञ्+यत्, णुट् आगम, उपधा ह्रस्व, ह्रस्वकरण सामर्थ्य से अगुण, पुण्यम् । (श्वेत.वृ.५/११३) ।

## १३२. अमिनक्षिकडिभ्योऽत्रः ।३-५।

एभ्योऽत्रप्रत्ययो भवति । 'अम रोगे' अमतीति *अमत्र* भाजनम् । 'णक्ष गतौ' नक्षतीति *नक्षत्रम्* अश्विन्यादि । 'कड मदे' कडतीति कडत्रं चर्मासनम् । 'लडयोः' इत्यैक्यात् *कलत्रं* भार्या नपुंसकलिङ्गे च ।

अम् नक्ष् कड् इन धातुओं से अत्र प्रत्यय होता है ।

***अमत्रम्*** अम रोगे (चु.१४०) । बीमार होना, रुग्ण होना । अमति । अम्+अत्र, विभक्तिकार्य, अमत्रम् । पात्र (बर्तन) ।

अमति भक्षयति अस्मिन् अमत्रम् । (प्र.सर्व.३-१०४) । सर्वमावपन भाण्डं पात्रामत्रं च भाजनम् (अ.को.२/९/३३) ।

***नक्षत्रम्*** णक्ष गतौ (भू.२०८) । नक्षति । 'णो नः' (कात.३/८/३५) से ण् को न् । नक्ष्+अत्र, विभक्तिकार्य, नक्षत्रम् । तारागण । अश्विनी आदि २७ नक्षत्र ।

***कडत्रम्*** कड मदे (भू.१२९, तु.९५) । मद=दुःख या आनन्द में लीन होना । कडति । कड्+अत्र, विभक्तिकार्य, कडत्रम् । चर्मासन ।

ड् तथा ल् के समान होने से कलत्रम् । भार्या । गड्+अत्रन्, गकारस्य ककारः डलयोरेकत्वस्मरणात् कलत्रम् (उज्ज्वल.३/१०६) । कलत्रं श्रोणिभार्ययोः (अ.को.३/३/१७८) ।

## १३३. भृञोऽतः ।३-६।

अस्मादतप्रत्ययो भवति । 'डु भृञ्' बिभर्तीति भरतः राजा प्रथमतीर्थङ्करपुत्रो नटो वा ।

भृञ् धातु से अत प्रत्यय होता है ।

***भरतः*** डु भृञ् धारणपोषणयोः (अ.८५) । धारण करना, पोषण करना । बिभर्ति । भृ+अत, ऋ को अर् गुण, विभक्तिकार्य, भरतः । राजा । जैनों के प्रथम तीर्थङ्कर ऋषभदेव का पुत्र (भरत) । नाट्यकला के प्रवर्तक । राम का अनुज । दुष्यन्त-पुत्र । पक्षिविशेष (भरद्वाज पक्षी) क्षत्रियविशेष । भरतो वाद्यभेदेऽपि दौष्यन्तौ सञ्चरे नटे । रामानुजे च भरतस्तन्तुवायेऽपि च क्वचित् । (वि.प्र.को.वान्त.११४) ।

## १३४. पृषिरञ्जिभ्यां यण्वत् ।३-७।

आभ्यामतप्रत्ययो भवति, स च यण्वत् । 'पृषु वृषु[1]' पर्षतीति *पृषतः* कस्तूरीमृगः । 'रञ्ज रागे' जनं रञ्जयतीति *रजतं* रौप्यम् । अगुणत्वमनुषङ्गलोपः ।

पृष्, रञ्ज् इन दोनों धातुओं से अत प्रत्यय तथा उसको यण्वद्भाव होता है । यण्वद्भाव करने से कात.व्या. में गुण का निषेध होता है ।

1. पृषु उक्ष सेचने (ति.अनु.३-७) ।

*पृषतः* पृषु सेचने (भू.२२६) । सेचन=सींचना । पर्षति । पृष्+अत, अत को यण्वद्भाव करने से धातु को गुण का निषेध, विभक्तिकार्य, पृषतः । कस्तूरीमृग (चित्तीदार हरिण) । जलबिन्दु । पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दु-युक्तेऽप्युभाविमौ । (मेदिनी.तान्त.१३६) ।

*रजतम्* रञ्ज रागे (भू.६०५) । राग=रंगना । रञ्जयति । रञ्ज्+अत, अनिदनुबन्धानामगुणेऽनुषङ्गलोपः (कात.३/६/१) इस सूत्र से अनुषङ्ग संज्ञक न् का लोप, विभक्तिकार्य, रजतम् । रौप्य (चाँदी) । रजतं त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्बणे (मेदिनी.तान्त.१४४) । रजतं विशदे दन्तिदन्तयोस्तारहारयोः (वि.प्र.को.तान्त.८६) ।

## १३५. आङि वसेरथः[1] ।३-८।

आङि उपपदे वसेरथप्रत्ययो भवति । 'वस निवासे' आङ्पूर्वः । आवसति लोकोऽस्मिन्निति *आवसथं* गृहम्[2] ।

'आङ्' के उपपद में रहने पर वस् धातु से अथ प्रत्यय होता है ।

*आवसथम्* वस निवासे (भू.६१४) । रहना, निवास करना । आवसति लोकोऽस्मिन् (जहाँ मनुष्य निवास करते हैं) । आङ् (पूर्वक) वस्+अथ, विभक्तिकार्य, आवसथम् । गृह (घर) । आवसथः (पुं.) ।

कलापोणादि के बं.सं. में सम्, आङ्, परि. उप उपसर्ग पूर्वक तथा नञ् पूर्वक वस् धातु से अथ प्रत्यय होता है । पा.उ. में अन्य उपसर्गों के साथ वस् धातु से अथ प्रत्यय विहित है ।

---

1. समाङ्पर्युपनञ्सु वसतेरथः (बं.सं.३-१३९) ।
   उपसर्गे वसेः (उज्ज्वल.३-११४) ।
2. यज्ञाग्निगृहम् (ति.अनु.३-८) ।

आ–आवसथम् । संवसथः ग्राम । परिवसथः गृहविशेष । उपवसथः समीपवासी । नञ्–अवसथः परिव्राट् ।

## १३६. जृवृभ्यामूथः ।३–९।

आभ्यामूथप्रत्ययो भवति । 'जॄ[1] वयोहानौ' जीर्यते *जरूथम्* आर्द्रमांसम् । 'वृञ् वरणे' वृणोतीति *वरूथम्* रथगोपनम् ।

जृ तथा वृञ् धातु से ऊथ प्रत्यय होता है ।

***जरूथम्*** जॄष वयोहानौ (चु.२६५) । जीर्ण होना, अवस्थारहित होना । जीर्यते (कर्म) । जृ+ऊथ, ॠ को अर् गुण, विभक्तिकार्य, जरूथम् । गीला मांस । जरूथम् कलुषम् (सरस्वती.२/२/१६२) ।

***वरूथम्*** 'वृञ् वरणे' (सु.८) । वृणोति । वृ+ऊथ, ऋ को अर्, विभक्तिकार्य, वरूथम् । (वरूथ) । रथगोपन (लड़ाई में शत्रु के प्रहार से बचने के लिए रथ में लगाये हुए लोहा आदि का परदा) । वरूथो रथगुप्तौ स्याद् वरूथं चर्मवेश्मनोः (मेदिनी.थान्त.२१) ।

## १३७. अतिचमिरभियुभ्योऽसः ।३–१०।

एभ्योऽसः प्रत्ययो भवति । 'अत सातत्यगमने' अततीति *अतसी* क्षुमा । नदादित्वादीः । 'चमु क्षमु जमु [चम] तीति *चमसं* यज्ञोपकरणम् । 'रभ राभस्ये' रभते *रभसः* उत्साहः । 'यु मिश्रणे' यौतीति *यवसः* घासः ।

अत्, चम्, रभ्, यु इन धातुओं से अस प्रत्यय होता है ।

***अतसी*** अत सातत्यगमने (भू.३) । जाना, निरन्तर चलते रहना । अतति । अत्+अस, स्त्री. में 'नदाद्यन्चि' (कात.२/४/५०) इत्यादि सूत्र

---

1. जॄष वयोहानौ (चु.२६५) ।

से ई प्रत्यय, विभक्तिकार्य, अतसी । क्षुमा । तीसी, (अलसी) । अतसः– वायु । आत्मा । अतसी स्यादुमा क्षुमा (अ.को.२/९/२०) ।

*चमसः* चमु अदने (भू.१५६) । खाना, भक्षण करना । चमति । चम्+अस, विभक्तिकार्य, चमसः । यज्ञोपकरण– विशेष । यज्ञपात्र (सोम पान करने का चमचे के आकार का लकड़ी का यज्ञपात्र) । उड़द या मसूर आदि का बेसन । स्त्री. चमसी, काष्ठनिर्मित यज्ञपात्र । चमसो यज्ञपात्रस्य भेदेऽस्त्री पिष्टके स्त्रियाम् (मेदिनी.सान्त.२१) ।

*रभसः* रभ राभस्ये (भू.४७१) । राभस्य= आनन्दित होना, प्रसन्न होना । रभते । रभ्+अस, विभक्तिकार्य, रभसः । उत्साह । तेज, प्रचण्ड । वेग हर्ष । रभसो वेगहर्षयोः (मेदिनी.सान्त.३१) ।

*यवसः* यु मिश्रणे (अ.६) । मिलना । यौति । यु+अस, गुण, अवादेश, विभक्तिकार्य, यवसः । घास । अश्वादि की घास । यावसः– वह्यियुभ्यां णित्, यावसस्तृणसन्ततौ (उज्ज्वल.३/११९) । घासो यवसं तृणमर्जुनम् (अ.को.२/४/१६७) ।

## १३८. वेतसवाहसदिवसफ–(प) नसाः[1] ।३–११।

एते असप्रत्ययान्ता निपात्यन्ते । 'वि[2] (वी) प्रजने' वेतीति वेतसः वानीरः । 'वह प्रापणे' वहतीति वाहसः अजगरः । दिवु क्रीडादिषु' दीव्यतीति दिवसः दिनम् । फण गतौ फणते फनसः[3] (पनसः) वृक्षविशेषः ।

---

1. वेतसवाहसदिवसपनसाः (बं.सं.) ।
2. वी गतिप्रजनकान्त्यसनखादनेषु (क्षी.त.अ.४१), (कात.धा.अ.१४) ।
3. पनसः (श्वेत.वृ.३–१११) पनसः कण्टकिफलम् (उज्ज्वल.३–११७) । मं.सं. में 'फणसः' पाठ है जो अन्यत्र उपलब्ध नहीं होता । 'पनसः' ऐसा पकारघटक पाठ उणादि ग्रन्थों में प्राप्त होता है । अतः यहाँ पनसः पाठ अपेक्षित है ।

वेतस, वाहस्, दिवस तथा पनस ये सभी अस प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***वेतसः*** वी प्रजनकान्त्यसनखादनेषु च (अ.१४) । गर्भवती होना, इच्छा करना, फेंकना, खाना । वेति । वी+अस, धातु को गुण से एकार, त् अन्तादेश, विभक्तिकार्य, वेतसः । वानीर (बेंत) । विदुल । वृक्षभेद । काष्ठजाति ।

***वाहसः*** वह प्रापणे (भू.६१०) । पहुँचना, भेजना । वहति । वह्+अस, निपातन से धातु की उपधा को दीर्घ, विभक्तिकार्य, वाहसः । अजगर । सर्प । जरद्गव, अग्नि (श्वेत.वृ.३/११४) पा.उ. वहियुभ्यां णित् (वै.सि.कौ.उ.सू.३/३९९) । वाहसो जलनिर्यासेऽजगरे सुनिषण्णके (वि.प्र.को.सान्त.१७) ।

***दिवसः*** दिवु क्रीडादिषु (दि.१) । खेलना आदि । दीव्यति । दिव्+अस्, निपातन से गुणाभाव, विभक्तिकार्य, दिवसः (पु.नं.) दिन ।

***पनसः*** पन च (भू.४०२) । पनायते । पन्+अस, पनसः । वृक्षविशेष । कटहल का वृक्ष । काँटा । (फण्+अस- फणसः) ।

**१३९. कृशृशलिगर्दिरासिवलिवल्लिभ्योऽभः[1] ।३-१२।**

एभ्योऽभप्रत्ययो भवति । 'डु कृञ् करणे' करोति वेगमिति *करभः* उष्ट्रः । कपिरिकादित्वाल्लत्वम् । *कलभः* बालहस्ती । 'शृ हिंसायाम्' शृणातीति *शरभः* अष्टापदजीवविशेषः । 'शल श्वल आशुगतौ' 'शल चलने वा' शलतीति *शलभः* पतङ्गः । 'नर्द गर्द शब्दे' गर्दतीति *गर्दभः* स्वरः । 'रस शब्दे' हेताविन् । रसतीति *रासभः* स एव ।

---

1. कृशृगर्दिरासिवल्लिभ्योऽभः (बं.सं.३-१४३) ।

'वल वल्ल च' वलतीति[1] *वलभिः* (*वलभी*) नदादित्वादीः । गृहाणामाच्छादनम् । 'वल वल्ल च' वल्लतीति (वल्लते) वल्लभः हृदयम् ।

कृ, शृ, शल्, गर्द्, रास्, वल्, वल्ल् इन धातुओं से अभ प्रत्यय होता है ।

***करभः*** डु कृञ् करणे (त.७) । करोति वेगम् (जो वेग पूर्वक कार्य करता है) । कृ+अभ, ऋ को अर्, विभक्तिकार्य, करभः । उष्ट्र (ऊँट) । उष्ट्र का बालक ।

करभो मणिबन्धादिकनिष्ठान्ते तथोष्ट्रके (वि.प्र.को.भान्त.२३) । 'कपिरिकादेर्लोकतः सिद्धिः' इस नियम से लत्व होने पर कलभः । बालहस्ती (हाथी का बच्चा) ।

***शरभः*** शृ हिंसायाम् (क्री.१५) । शृणाति । शृ+अभ, ऋ को अर्, विभक्तिकार्य, शरभः । आठ पैरों वाला विशेष प्रकार का पशु[2] । पशुराज । मृगविशेष । शरभस्त्वष्टापदे प्रोक्तो मृगान्तरे (वि.प्र.को.भान्त.२३) ।

***शलभः*** शल आशुगतौ (भू.१८४) । शल चलने (भू.४१५,५५४) । शलति । शल्+अभ, विभक्तिकार्य, शलभः । पतङ्ग (फतिङ्गा) । तितली । समौ पतङ्गशलभौ (अ.को.२/५/२८) ।

***गर्दभः*** गर्द शब्दे (भू.१७) । शब्द करना, आवाज करना । गर्द्+अभ, विभक्तिकार्य, गर्दभः । स्वर विशेष वाला । गधा । गर्दभं श्वेतकुमुदे

---

1. 'वल वल्ल' धातु (भू.४१६) आत्मनेपदी है । अतः 'वलति' के स्थान पर वलते पाठ होना चाहिए ।
2. अष्टपादूर्ध्वनयन ऊर्ध्वपादचतुष्टयः ।
सिंहं हन्तुं समायाति शरभो वनगोचरः । (महा. १२/११७/१२) ।

गर्दभो गन्धभिद्यपि । रासभे गर्दभी क्षुद्ररोगजन्तुविशेषयोः । (मेदिनी.भान्त.१५-१६) ।

*रासभः* रस शब्दे (भू.२३२) । धातोश्च हेतौ (कात.३/२/१०) सूत्र से इन्, रासि+अभ, 'कारितस्यानामिड्विकरणे' (कात.३/६/४४) से इन् का लोप, विभक्तिकार्य, रासभः । गर्दभः । गर्दभ स्वर ।

*वलभी* 'वल च' (भू.४१६) । वलते । वल्+अभ, नदादिगण में पाठ होने से 'नदाद्यन्चि' (कात.२/४/५०) इत्यादि सूत्र से ई प्रत्यय, विभक्तिकार्य, वलभी । घरों के छत ढकने का आवरण ।

*वल्लभः* वल्ल संवरणे (भू.४१६) । आच्छादित करना, ढकना । वल्लते । वल्ल्+अभ, विभक्तिकार्य, वल्लभः । हृदय । प्रिय । वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे (मेदिनी.भान्त.१८) ।

## १४०. ऋषिवृषिभ्यां यण्वत् ।३-१३।

आभ्यामभप्रत्ययो भवति । स च यण्वत् । 'ऋष्टि[1] (रि पि) ऋषि (ऋषी) गतौ' ऋषतीति *ऋषभः* नाभेयो[2] जिनः । गन्धर्वस्वरविशेषो वा । 'पृषु वृषु उक्ष सेचने' वर्षतीति *वृषभः* गौः[3] ।

---

1. 'ऋष्टि ऋषि' म.सं. । 'ऋष्टि' ऐसा पाठ धातुपाठ में उपलब्ध नहीं होता । 'रि पी ऋषी' ऐसा पाठ मिलता है । सम्भवतः रि पि के स्थान में प्रमाद से 'ऋष्टि' पाठ हो गया हो । रि पी ऋषी गतौ (तु.१५) ।
2. नाभिमूलाद् यदा वर्ण उत्थितः कुरुते ध्वनिम् । वृषभस्येव निर्याति हेलया ऋषभः स्मृतः (इति सङ्गीतदामोदरः, शब्दकल्पद्रुमः,पृ.२८७) ।
3. अनड्वान् (बं.सं.३/१४४) ।

ऋष्, वृष् इन धातुओं से अभ प्रत्यय होता है । अभ को यण्वद्भाव भी होता है । यण्वद्भाव होने से धातु को गुण का निषेध होता है ।

*ऋषभः* ऋषी गतौ (तु.१५) । ऋषति । ऋष्+अभ, यण्वद्भाव से ऋ को गुणनिषेध, विभक्तिकार्य, ऋषभः । नरश्रेष्ठ । जिन । गन्धर्व का विशेष स्वर (वीणा आदि के तार तथा गन्धर्व के मुख से निकला हुआ स्वर) । संगीत के सात स्वरों में से दूसरा । बैल, पुच्छ, छिद्र, औषध, कर्ण । ऋषभः स्वरभेदे स्यादष्टवर्गौषधे वृषे । श्रेष्ठार्थे च वराहस्य पुच्छे रन्ध्रे च कर्णयोः । (वि.प्र.को.भान्त.२४)

*वृषभः* वृषु सेचने (भू.२२६) । सींचना, बरसा करना, बरसना । वर्षति । वृष्+अभ, यण्वद्भाव से गुणनिषेध, विभक्तिकार्य, वृषभः । बैल । पुङ्गव, वृष । अनड्वान् । वृषभः पुङ्गवे वृषे (वि.प्र.को.भान्त.२५) ।

## १४१. इः सर्वधातुभ्यः[1] ।३–१४।

सर्वधातुभ्यो यथासङ्ख्यम् (यथासम्भवम्) इः प्रत्ययो भवति । 'क्षु रु शब्दे' रौतीति *रविः* सूर्यः । [कु शब्दे] कौतीति *कविः* काव्यकर्ता शुक्रश्च । 'दॄ विदारणे' दृणातीति *दरिः* गुहा । 'ध्वन शब्दे' ध्वनतीति *ध्वनिः* शब्दः । 'वल वल्ल च' वलतीति[2] *वलिः* दैत्यविशेषः । वल्लते *वल्लिः* लता । स्त्रियाम् ईः । *वल्ली* । 'अव रक्ष पालने' ऊर्णाभिरात्मानमवतीति *अविः* मेषः । 'सजि[3] छपि पथि गतौ'

---

1. सर्वधातुभ्य इः (बं.सं.) ।
2. वलतीति म.सं. । वल धातु आत्मनेपद पठित है । अतः 'वलते' पाठ होना चाहिए ।
3. धातुपाठ में 'ष्वर्ति' पठित है । सर्जि के स्थान पर 'ष्वर्ति' होना चाहिए । (कात.चु.२७) ।

चौरादिः । इदनुबन्धत्वान्नागमः । पन्थयतीति *पन्थाः* मार्गः । 'मन्थ विलोडने' मन्थतीति *मन्थाः* मथनदण्डः । पथिमन्थ्यादीनामात्वम् । 'हृञ् हरणे' हरतीति *हरिः* विष्णुः अक्कादिषु ।

सभी धातुओं से यथासम्भव इ प्रत्यय होता है । बं.सं. में इससे विपरीत 'सर्वधातुभ्य इः' ऐसा सूत्र पाठ है ।

***रविः*** रु शब्दे (अ.१०) । रौति । रु+इ, गुण, अवादेश, विभक्तिकार्य, रविः । सूर्य ।

***कविः*** कु शब्दे (अ.१०) । कु+इ, गुण अवादेश, विभक्तिकार्य, कविः । काव्यकर्ता, शुक्र । कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः (वि.प्र.को.वान्त.२४) ।

***दरिः*** दृ विदारणे (क्री.१९) । विदारण=चीरना, फाड़ना । दृणाति । दृ+इ, ॠ को अर्, विभक्तिकार्य, दरिः । गुहा । प्रपात । दरी तु कन्दरो वा (अ.को.२/३/६) ।

***ध्वनिः*** ध्वन शब्दे (भू.१४६,५३०, चु.२०७) । शब्द करना । ध्वनति । ध्वन्+इ, विभक्तिकार्य, ध्वनिः । शब्द । आवाज ।

***बलिः*** वल वल्ल च (भू.४१६) । आच्छादित करना, ढकना, चलना । वलते । वल्+इ, वकार को बकार, विभक्तिकार्य, बलिः । दैत्यराट् । उपहार, आहार, पूजा, चंवर का दण्ड, एक प्रसिद्ध राक्षस । बलिश्चामरदण्डे च जरया श्लथचर्मणि । उदरावयवे दैत्ये करपूजोपहारयोः । गृहदारुविशेषे च, गन्धकेऽपि क्वचिन्मतः । (वि.प्र.को.लान्त.३६)

***वल्लिः*** वल्लते । वल्ल्+इ, वल्लिः । लता । स्त्री. में 'नदाद्यन्चि' इत्यादि सूत्र से ई, विभक्तिकार्य, वल्ली । वल्ली स्यादजमोदायां

व्रतत्यामपि योषिति (मेदिनी.लान्त.३८) । पुष्पभेदेऽपि वीरुधि (वि.प्र.को.लान्त.५१) ।

***अविः*** अव पालने (भू.२०२) । रक्षा करना । ऊर्णाभिरात्मानमवति (जो ऊन से अपनी रक्षा करता है) । अव्+इ, विभक्तिकार्य, अविः । मेष । भेंड । पर्वत । रवि । ऊनी कम्बल । चूहा । स्त्री. अविः रजस्वला स्त्री । अविः शैले रवौ मेषे भवेन्मूषिककम्बले । ऋतुमत्यामविः प्रोक्ता शिविर्भूर्ज्जे नृपान्तरे । (वि.प्र.को.वान्त.२६)

***पन्थाः*** पथि गतौ (चु.२७) । पन्थयति । पथि में इदनुबन्ध के कारण न् आगम । पन्थ्+इ, लिङ्गसंज्ञा, सि, 'पन्थिमन्थ्यृभुक्षीणां सौ' (कात.२/२/३५) इस सूत्र से पन्थि घटक इकार को आकार, विभक्तिकार्य, पन्थाः । मार्ग ।

***मन्थाः*** मन्थ विलोडने (भू.६) । विलोडन=मथना । मन्थति । मन्थ्+इ, लिङ्गसंज्ञा, सि, पन्थिमन्थ्यृभुक्षीणां सौ' (कात.२/२/३५) इस सूत्र से मन्थि घटक इकार को आकार, विभक्तिकार्य, मन्थाः । मथनदण्ड । (मथानी–मथानी का दण्डा) ।

***हरिः*** हृञ् हरणे (भू.५९६) । हरति । हृ+इ, ऋ को अर्, विभक्तिकार्य, हरिः । विष्णु अक्का आदि । सिंह । हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेऽंशौ, शक्रे लोकान्तरे पुमान् । वाच्यवत् पिङ्गहरितोर्हारो मुक्तावलौ युधि । (मेदिनी.रान्त.९९–१००)

ति.अनु.– ग्रन्थिः सर्वबन्धन । पविः वज्र ।

## १४२. गृनाम्युपधात् क्विः[1] (किः) ।३-१५।

गिरतेः नाम्युपधाच्च[2] धातोः क्विः प्रत्ययो भवति । नाम्नि उपधा यस्येति विग्रहः । 'गॄ निगरणे' गिरतीति *गिरिः* पर्वतः । 'रुच दीप्तौ' रोचते *रुचिः* अभिलाषः । 'दिपि[3] (दीपी) दीप्तौ' दीप्यत इति *दीपिः* । 'कृष विलेखने' कर्षतीति *कृषिः* कर्षणम् । 'घृणु दीप्तौ' घृणोतीति *घृणिः* दीप्तिः । इत्यादयोऽप्यनुसर्तव्याः ।

गॄ धातु तथा जिस धातु की उपधा में नामि संज्ञक वर्ण हों, उससे कि प्रत्यय होता है । नामी उपधा यस्य (बहु.समा.) नाम्युपधः, तस्मात् नाम्युपधात् ।

***गिरिः*** गॄ निगरणे (तु.२२) । निगलना, खाना ☞ गिरति । गॄ+कि, 'ऋदन्तस्येरगुणे' से ॠ को इर्, विभक्तिकार्य, गिरिः । पर्वत । गिरिर्गीर्णौ गिरियके क्रीडाकन्दुकशैलयोः । नेत्रामयविशेषेऽपि मत्स्ये तु गिरिरन्यवत् । (वि.प्र.को.रान्त.८०)

***रुचिः*** रुच दीप्तौ (भू.४७३) । चमकना, रुचना, अच्छा लगना । रोचते । रुच्+कि, क् अनुबन्ध से यण्वद्भाव के कारण गुणाभाव, विभक्तिकार्य, रुचिः । अभिलाषा । किरण । शोभा । रुचिर्मयूखे शोभायामभिष्वङ्गाभिलाषयोः (वि.प्र.को.चान्त.७) ।

---

1. पाठा.- गृनाम्युपधाच्च किः । (क्वि म.सं.) । 'क्वि' में वकार का पाठ यहाँ व्यर्थ है । ति.अनु. में 'कि' पाठ है । अतः 'क्वि' के स्थान पर 'कि' पाठ होना चाहिए ।
2. नाम्युपधाच्च धातोः म.सं. । यहाँ नाम्युपधात् च धातोः' ऐसा विच्छेद होगा । इसमें (विसर्ग को श् होने पर) नाम्युपधाद्धातोश्च' ऐसा पाठ उचित होगा ।
3. प्रायः धातुपाठों में 'दीपी' पाठ उपलब्ध होता है । वृत्ति में 'दिपि' के स्थान पर 'दीपी' पाठ होना चाहिए । दीपी दीप्तौ (दि.९५) ।

***दीपिः*** दीपी दीप्तौ (दि.९५) । चमकना, प्रकाशित होना । दीप्यते । दीप्+कि, विभक्तिकार्य, दीपिः । प्रकाश । प्रभा ।

***कृषिः*** कृष विलेखने (भू.२२३) । विलेखन=खींचना, जोतना । कृष्यते । कृष्+कि, गुणाभाव, विभक्तिकार्य, कृषिः । कर्षण (जोतना) । धान्य (बं.स.) । खेती ।

***घृणिः*** घृणु दीप्तौ (त.६) । घृणोति । घृण्+कि, विभक्तिकार्य, घृणिः । दीप्ति । प्रकाश ।

इसी प्रकार 'कि' प्रत्यय के द्वारा एतदतिरिक्त अन्य लोकप्रयुक्त शब्दों को भी निष्पन्न कर लेना चाहिए ।

## १४३. गण्डिमण्डिभ्यो (मण्डिभ्याम्) झः[1] ।३–१६।

आभ्यां झप्रत्ययो भवति । 'गडि वदनैकदेशे' इदनुबन्धत्वान्नागमः । हेताविन् । गण्डयतीति *गण्डयन्तः*[2] भूषणम् । 'मडि भूषायाम्' मण्डयतीति *मण्डयन्तः* ।

***गण्डयन्तः*** गडि वदनैकदेशे (भू.१३१) । (गालो मे रोग होना) गण्डमाला होना, वदन के एक देश में होने वाली क्रिया । गडि के इदनुबन्ध सहित होने से न् आगम । 'धातोश्च हेतौ' (कात.३/२/१०) सूत्र से इन् । गण्डयति । गण्डि+झ, 'युवुझामनाकान्ताः' (कात.४/६/५४) इस सूत्र से झ को अन्तादेश, गुण, अवादेश, विभक्तिकार्य, गण्डयन्तः । मेघ । दन्त । जाल । कपोल ।

---

1. पाठा. गण्डिमण्डिभ्यां झच्, गण्डयन्तो दन्तः, मण्डयन्तः भूषणम् (ब.सं.) ।
2. 'गण्डयन्तः' शब्द का भूषण अर्थ उपयुक्त नहीं है । मण्डयन्तः का भूषण अर्थ उपलब्ध होता है और संगत भी है । प्रतीत होता है कि मुद्रण दोष से मण्डयन्तः का भूषण अर्थ गण्डयन्तः के साथ जोड़ दिया जो कि मण्डयन्तः के बाद वृत्ति में देना चाहिए था ।

***मण्डयन्तः*** मडि भूषायाम् (चु.९२) । अलङ्कृत करना, सजाना । मण्डयति । मण्डि+झ, 'युवुझामनाकान्ताः' (कात.४/६/५४) इस सूत्र से झ् को अन्तादेश, गुण अयादेश, विभक्तिकार्य, मण्डयन्तः । भूषण । अलङ्कार ।

## १४४. जी(जि)विशिवसिभासिवहिनन्दिहिसाधिभ्यश्च ।३-१७।

एभ्यो झप्रत्ययो भवति । 'जि जये' जयतीति *जयन्तः* इन्द्रपुत्रः । 'विश प्रवेशने' विशति लोकोऽस्मिन्निति *वेशन्तः* पल्वलम् । 'वस निवासे' वसति लोकोऽस्मिन्निति *वसन्तः* ऋतुराजः । 'भासृ दीप्तौ' भासतीति[1] (भासते) *भासन्तः* शोभनम् । 'वह प्रापणे' वहतीति *वहन्तः* कालः । 'टु नदि समृद्धौ' नन्दतीति *नन्दन्तः* बुद्धिमान् हृष्टो वा । 'हि गतौ'[2] हिनोतीति *हेमन्तः* ऋतुविशेषः । 'राध साध संसिद्धौ' साध्यतीति *साधन्तः* भिक्षुः ।

जि, विश्, वस्, भास्, वह्, नन्द, हि, साध् इन धातुओं से झ प्रत्यय होता है । झ् को अन्तादेश होता है ।

***जयन्तः*** जि जये (भू.१९१) । जीतना । जयति । जि+झ, झ् को अन्तादेश, गुण तथा अयादेश से जय् अन्त=जयन्त, लिङ्गसंज्ञा, सि, विसर्ग जयन्तः । इन्द्र का पुत्र । शङ्कर । जयन्तः पाकशासनिः (अ.को.१/१/४६) ।

***वेशन्तः*** विश प्रवेशने (तु.५७) । प्रवेश करना, घुसना । विशति लोकोऽस्मिन् । विश्+झ, झ् को अन्तादेश, गुण, विभक्तिकार्य, वेशन्तः ।

---

1. भासृ दीप्तौ (पा.धा.भू.६६५) धातु आत्मनेपद पठित है । तदनुसार वृत्ति में भासति के स्थान पर 'भासते' ऐसा आत्मनेपदरूप अपेक्षित है ।
2. हिम इति सौत्रोऽयं धातुः, हेमन्तः (बं.सं.) ।

पल्वल । सरोवर । पोखरा । पानी का छोटा गड्ढा । वेशन्तः पल्वलं चाल्पसरः (अ.को.१/१०/२८) ।

*वसन्तः* वस निवासे (भू.६१४) । वसति लोकोऽस्मिन् । वस्+झ, झ् को अन्तादेश, वसन्तः । ऋतुराज ।

*भासन्तः* भासृ दीप्तौ (भू.४४० भास दीप्तौ) । चमकना, प्रकाशित होना । भासते । भास्+झ, झ् को अन्तादेश, विभक्तिकार्य, भासन्तः । सुन्दर । शोभन । पक्षी । भासन्तः सुन्दराकारे भासन्तो भासपक्षिणि (वि.प्र.को.तान्त१३७) ।

*वहन्तः* वह प्रापणे (भू.६१०) । पहुँचाना, भेजना, ढोना । वहति । वह्+झ, झ् को अन्तादेश, विभक्तिकार्य, वहन्तः । काल । समय ।

*नन्दन्तः* टु नदि समृद्धौ (भू.२५) । वृद्धि होना, आनन्द पाना । इदित् होने से न् आगम । नन्दति । नन्द्+झ, झ् को अन्तादेश, विभक्तिकार्य, नन्दन्तः । बुद्धिमान् या हृष्ट पुरुष । समृद्धिमान् (ति.अनु.) नन्दयतीति नन्दयन्तः राजा हिरण्यञ्च (श्वेत.वृ.३–१२३) ।

*हेमन्तः* हि गतौ (सु.११) । हिनोति । हि+झ, झ् को अन्तादेश, तथा म् आगम गुण, हेमन्तः । हन्ति प्राणिनः तुषारादिना इति हेमन्तः ऋतुविशेषः (श्वेत.वृ.३–१२४) ।

*साधन्तः* साध संसिद्धौ (सु.१६) । संसिद्धि=सिद्ध करना, पूर्ण करना । साध्नोति (साध्यति) (कार्याणि)। साध्+झ, झ् को अन्तादेश, विभक्तिकार्य, साधन्तः । भिक्षु । बं.सं.–साधयन्तः ।

## १४५. कुङो ररक्[1] ।३-१८।

अस्माद्ररकप्रत्ययो भवति । 'कुङ शब्दे' कवते *कुररः* पक्षी । स्त्रियान्तु *कुररी* ।

कु धातु से ररक् प्रत्यय होता है । 'ररक्' में क् अनुबन्ध यण्वद्भावार्थ है । इससे धातु को गुण का निषेध होता है ।

**कुररः** कुङ् शब्दे (भू.४५८) । बोलना । कवते । कु+ररक्, क् अनुबन्ध से यण्वद्भाव के कारण धातु को गुण का निषेध, विभक्तिकार्य, कुररः । पक्षी । स्त्री-कुररी । चक्रन्द सीता कुररीव भूयः (रघु.१४-६८) ।

तु.- कुवः क्ररन्, कुररः (दया.उ.को.३-१३३) ।

## १४६. अङ्गिमदिमन्दि[2]कडिमृजिभ्य आरः ।३-१९।

एभ्य आरप्रत्ययो भवति । अगिः गत्यर्थः । अङ्गतीति *अङ्गारः* दग्धकाष्ठम् । 'मदी हर्षे' माद्यतीति[3] *मदारः* मत्तहस्ती । 'मदि स्तुत्यादौ' मन्दते *मन्दारः* वृक्षः । 'कड मदे' कडतीति *कडारः* पिङ्गलः । 'मृजू शुद्धौ' आख्वर्थं गृहं मार्ष्टीति *मार्जारः* बिडालः । कनीनिका इत्यादौ । श्रकि गत्यर्थः । श्रङ्कते *शृङ्गारः*[4] रसविशेषः । कस्य गत्वं रेफस्य ऋत्वम् ।

---

1. कौतेरवक् (ति.अनु.३-१८) कुरवः ।
2. अङ्गिमदिमन्थि म.सं. । यहाँ 'मथि' के स्थान पर 'मन्दि' पाठ अपेक्षित है । यतः वृत्ति में मन्द् धातु से मन्दारः शब्द निष्पादित है । अतः 'मथि' के स्थान पर 'मदि' पाठ किया गया ।
3. मद्यते म.सं. । 'मदी हर्षे' धातु के दैवादिक परस्मैपद होने से 'माद्यति' रूप होना चाहिए । अतः वृत्ति में 'मद्यते' के स्थान पर 'माद्यति' पाठ किया गया ।
4. शृङ्गारभृङ्गारकुञ्जराः बं.सं. (३-१५१) (ति.अनु.) म.सं. में शृङ्गार, भृङ्गार तथा कुञ्जर ये तीनों शब्द इसी सूत्र की वृत्ति में तो

'भृञ्' बिभर्ति जलमिति *भृङ्गारः* जलस्थानम् । न्त्वात्वागमो[1] (न्वागमो) गोन्तश्च (गोऽन्तश्च) 'कूज[2] अव्यक्ते शब्दे' कूजते (कूजति) *कुञ्जरः* हस्ती । कूजेः परस्याकारस्य ह्रस्वत्वम्, जकारात्पूर्वो नागमः ऊकारस्य उकारः ।

अग्, मदी, मदि, कड्, मृज्, इन धातुओं से आर प्रत्यय होता है । इन धातुओं के अतिरिक्त श्रकि, भृ, एवं कूज् इन धातुओं से भी आर प्रत्ययान्त श्रृङ्गार, भृङ्गार तथा कुञ्जर इन तीन शब्दों का निर्देश किया है । ये तीनों शब्द सम्भवतः निपातन से सिद्ध होते हैं । अत एव इन तीनों के लिए देवनागरी मे पृथक् सूत्र होना चाहिए । बं.सं. एवं ति.अनु. में 'शृङ्गारभृङ्गारकुञ्जराः' ऐसा पृथक् सूत्र पाठ उपलब्ध होता है, किन्तु म.सं. मे इसी सूत्र की वृत्ति के अन्तर्गत ये तीनों शब्द संगृहीत हैं ।

*अङ्गारः* अगि गत्यर्थः (भू.३८) । इदनुबन्ध से न् आगम । अङ्गति । अङ्ग्+आर, अनुस्वार, तद् वर्गीय पञ्चम वर्ण, विभक्तिकार्य, अङ्गारः । जलती हुई लकड़ी । निर्धूम । अङ्गारम् (नपुं.) । अङ्गारोऽलातभौमयोः (वि.प्र.को.रान्त.१८२) ।

*मदारः* मदि स्तुत्यादौ (दि.४८) । प्रसन्न होना, तुष्ट होना । माद्यति । मद्+आर, मदारः । मतवाला हाथी । मदारो द्विरदे धूर्ते (वि.प्र.को.रान्त.१६९) ।

---

पठित हैं किन्तु इनका सूत्र में निर्देश नहीं है । इसीलिए बं.सं. एवं ति.अनु. में इनके संग्रहार्थ एक पृथक् सूत्र ही निर्दिष्ट है अतः म.सं. में भी ऐसा ही पृथक् सूत्र होना चाहिए ।

1. न्वात्वागमः म.सं. । इसके स्थान पर 'न्वागम' (नु आगम) पाठ तथा गोन्तः के स्थान पर 'गोऽन्तः' पाठ उचित एवं शुद्ध होगा ।
2. खजि गतिवैकल्ये (भू.६९) खजेः खकारस्य कुः, अनुस्वारः, वर्गान्तः ति.अनु. ।

*मन्दारः* मदी हर्षे (दि.४८) । मन्द्+रक्, विभक्तिकार्य, मन्दारः । वृक्ष । मन्दारः पारिभद्रार्कपर्णयोः सुरद्रुमेऽपि (वि.प्र.को.रान्त.१६६) ।

*कडारः* कड मदे (भू.१२९) । मद=दुःख या आनन्द में लीन होना । कडति । कड्+आर, विभक्तिकार्य, कडारः । पिङ्गल । पीला या भूरा रंग । दास । कडारः पिङ्गले दासे (मेदिनी.रान्त.१३०) ।

तु.- गडेः कड च, गड्+आर, गड् को कड, कडारः (दया.उ.को.३/१३५) ।

*मार्जारः* मृजू शुद्धौ (अ.२९) । धोना, स्वच्छ करना । आख्वर्थं गृहं मार्ष्टि (जो चूहों को पकड़ने हेतु घर की सफाई करता है) । मृज्+आर, ऋ को आर् वृद्धि, विभक्तिकार्य, मार्जारः । बिडाल । बिलार । मार्जारः ओतौ खट्वांशे (मेदिनी.रान्त.२०४) । स्त्री. मार्जारी । बिल्ली । कनीनिका (आंख की पुतली) ।

*शृङ्गारः*[1] श्रकि गत्यर्थः (भू.३३१) । श्रङ्कते । श्रङ्क्+आर, रकार को ऋ, ककार को गकार विभक्तिकार्य, शृङ्गारः । रसविशेष । शृङ्गारः सुरते नाट्यरसेऽपि गजमण्डने (वि.प्र.को.रान्त.१८३) । दम्पत्योरन्योन्यं सम्भोगस्पृहा (दया.उ.को.३–१३६) ।

*भृङ्गारः* डु भृञ् धारणपोषणयोः (अ.८५) । बिभर्ति जलम् (जो जल को धारण करता है) । भृ+आर, ग् अन्तादेश, नु आगम, न् को

---

1. बं.सं. एवं ति.अनु. में 'शृङ्गारभृङ्गारकुञ्जराः' ऐसा पृथक् सूत्रपाठ है । म.सं. में इन तीनों शब्दों को सूत्रान्तर्गत (३–१९) पढ़ा गया । बं.सं. के अनुसार देवनागरी में इन तीनों शब्दों को पृथक् सूत्र में उपदिष्ट होना चाहिए ।

अनुस्वार, तथा तद्वर्गीय पञ्चम वर्ण, विभक्तिकार्य, भृङ्गारः । जलस्थान । काञ्चनघट । भृङ्गारः कनकालुके (वि.प्र.को.रान्त.१८२) ।

*कुञ्जरः* कूज अव्यक्ते शब्दे (भू.७४) । अस्पष्ट बोलना । कूजति । कूज्+आर, कूज् से परवर्ती आर में ह्रस्व से अर, तथा जकार के पूर्व न् आगम, एवं कूज घटक ऊकार को उकार, विभक्तिकार्य, कुञ्जरः । हस्ती । कुञ्जरोऽनेकपे केशे स्त्री धातक्याञ्च पाटलौ (मेदिनी.रान्त.१३८) ।

## १४७. सर्तेरपष्षोऽन्तश्च ।३–२०।

अस्मादपप्रत्ययो भवति षोऽन्तश्च । 'सृ गतौ' सरतीति *सर्षपः* सिद्धार्थः ।

सृ धातु से अप प्रत्यय तथा ष् अन्तादेश होता है ।

*सर्षपः* सृ गतौ (भू.२७४) । सरति । सृ+अप, ष् अन्तादेश, धातु में ऋ को अर्, विभक्तिकार्य, सर्षपः । सिद्धार्थ । सफेद सरसों । धान्यविशेष । सिद्धार्थस्त्वेष धवलः (अ.को.२/९/१७) ।

## १४८. विटपादयः ।३–२१।

विटपकुणपकुटपदलपोलपाः । एते अपप्रत्ययान्ता निपात्यन्ते । 'विट शब्दे'[1] विटतीति *विटपः* स्तम्भः । 'कुण शब्दे' कुणतीति *कुणपः* शवः । 'कुट कौटिल्ये' कुटतीति *कुटपः* मानविशेषः ।

---

1. विड आक्रोशे (भू.१०१) ति.अनु.–बं.सं. ।

'दल ञि फला'। दलतीति दलपः प्रहरणम् । 'ऋ गतौ' इयर्तीति उलपः तृणविशेषः । एवमन्येऽप्यनुसर्तव्याः ।

विटप, कुणप, कुटप, दलप, उलप ये अप प्रत्ययान्त सभी शब्द निपातन से सिद्ध होते हैं ।

*विटपः* विट शब्दे (भू.१००) । शब्द करना, हास्य करना (हास्यशब्दे, का.कृ.धा.भू.१०९) वेटति । विट्+अप, विभक्तिकार्य, विटपः । स्तम्ब । तरु का अवयव विशेष । गुच्छा, विस्तार, शाखा (अ.को.३/३/१३१) । विस्तारो विटपोऽस्त्रियाम् (अ.को.२/४/१४) ।

*कुणपः* कुण शब्दे (तु.४७) । कुणति । कुण्+अप, कुणपः । शव । मुर्दा । विट्शारिकाया कुणपः पूतिगन्धौ शवेऽपि च (वि.प्र.को.णान्त.२०) ।

*कुटपः* कुट कौटिल्ये (तु.८३) । टेढ़ा होना, ठगना । कुटति । कुट्+अप, विभक्तिकार्य, कुटपः । मानविशेष । नापने का पात्र । कुटपो मानभेदे स्यात् कुटपो निष्कुटे मुनौ (वि.प्र.को.पान्त.१३) ।

*दलपः* दल ञि फला विशरणे (भू.१६५) । विशरण=कुम्हलाना, मुरझाना । दलति । दल्+अप, विभक्तिकार्य, दलपः । प्रहरण । शस्त्र ।

*उलपः* ऋ गतौ (अ.७४) । इयर्ति । ऋ+अप, निपातन से ऋ को उर्, र् को ल्, विभक्तिकार्य, उलपः । तृणभेद । कोमल तृण । उलपस्तृणभेदे स्याद् गुल्मिन्यामुलपः स्मृतः (वि.प्र.को.पान्त.१४) ।

वलतेः सम्प्रसारणम्, उलपं कोमलं तृणम् (वै.सि.कौ.उ.सू.३/४२५) ।

---

1. दल विदारणे (चु.१६९) अथवा दल ञि फला विशरणे (भू.१६५) ति.अनु. ।

इसी प्रकार की आकृति वाले अप प्रत्ययान्त शब्दों को निपातन से निष्पन्न कर लेना चाहिए ।

यथा– उषपः वह्नि, सूर्य । कचपम् शाकपात्र । खञ्जपम् घृत । पिष्टपम् भुवन । विशिपम् गृह, मन्दिर । (उज्ज्वल.३–१४३, १४५) ।

## १४९. वृतेस्तिकः ।३–२२।

अस्मात् तिकप्रत्ययो भवति । 'वृतु वर्तने' वर्तत इति *वर्तिका* दीपाश्रयः । चटिका वा । स्त्रियामादा ।

वृत् धातु से तिक प्रत्यय होता है । बं.सं. में वृञ् धातु से तिक प्रत्यय विहित है ।

*वर्तिका* वृतु वर्तने (भू.४८४) । व्यवहार करना, रहना । वर्तते । वृत्+तिक, ऋ को अर्, स्त्री. में 'स्त्रियामादा' (कात.२/४/४९) इस सूत्र से आ प्रत्यय, विभक्तिकार्य, वर्तिका । दीपाश्रय या चटका (पक्षिविशेष) ।

वृतेः ण्वुलि गुणे 'वर्तका शकुनौ प्राचाम्' (पा.७/३/४५,९) उज्ज्वल.३–१४६) ।

## १५०. कृतिभिदिलतिभ्यो यण्वत्[1] ।३–२३।

एभ्यस्तिकप्रत्ययो भवति, स च यण्वत् तेनागुणत्वम् । 'कृती छेदने' शुभं कृन्ततीति *कृत्तिकाः* स्त्रीत्वं बहुत्वं च, बहुला । 'भिदिर् विदारणे' भिनत्तीति *भित्तिका* कुड्यम् । लत इति सौत्रोऽयं धातुः । लततीति *लत्तिका* गोधा ।

---

1. पाठा. कृतभिदिलभितूलिनतिभ्यो यण्वत् (बं.सं.सू.३–१५५) । कृतभिदिलतिभ्यः कित् (श्वेत.वृ.३–१४१) ।

कृत्, भिद्, लत् इन धातुओं से तिक प्रत्यय होता है तथा तिक को यण्वद्भाव होता है । यण्वद्भाव होने से धातु को गुण का निषेध होता है । बं.सं. में कृत् भिद्, लभ्, तूल, नत् इन धातुओं से तिक तथा यण्वद्भाव विहित है ।

*कृत्तिकाः* कृती छेदने (तु.१२) । काटना, छेदना । शुभं कृन्तति (जो शुभ को काटती है) कृत्+तिक, यण्वद्भाव होने से धातु को गुण का निषेध, स्त्री. नित्य बहुवचन में जस्, विभक्तिकार्य, कृत्तिकाः । बहुला । नक्षत्र । अश्विनी आदि २७ नक्षत्रो में तीसरा नक्षत्र ।

*भित्तिका* भिदिर् विदारणे (रु.२) । विदारण=चीरना, तोड़ना । भिनत्ति । भिद्+तिक, 'अघोषे प्रथमः' (कात.२/३/६१) से द् को त्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, भित्तिका । कुड्य । भीत, दीवाल ।

*लत्तिका* लत (सौत्र धातु) लतति । लत्+तिक, स्त्री. में आ प्रत्यय, विभक्तिकार्य, लत्तिका । गोधा (छिपकली) । बं.स.–लभ्–लब्धिका । तूल–तोलिका । नत्तिका ।

## १५१. इष्यसि[1] (शि)भ्यां तकः ।३–२४।

आभ्यां तकप्रत्ययो भवति । ....... ('इषु इच्छायाम्' इच्छतीति *इष्टका* पक्वमृद्विशेषः । 'अश भोजने' अश्नातीति *अष्टका* श्राद्धविशेषः[2]) इष्टका । अष्टका ।

---

1. पाठा. इष्यशिभ्या तकः (बं.सं.सू.) इष् एवं अश् धातु से पञ्चपादी तथा बं.स. मे 'तक' प्रत्यय करके इष्टका, अष्टका शब्दों की निष्पत्ति की गई है । मद्रास संस्करण में दन्त्य के स्थान पर तालव्य 'अश्' घटित पाठ 'इष्यशिभ्याम्' ऐसा होना चाहिए ।
2. म.सं. में इष्टका तथा अष्टका शब्दों की प्रकृतिभूत धातु एवं व्युत्पत्ति तथा शब्दार्थ अनिर्दिष्ट हैं । एतदर्थ पूर्व सम्पादक ने.........१६ बिन्दुओं का निर्देश किया है । कलापोणादि के बं.सं. के आधार पर 'इषु इच्छायाम् इच्छतीति तथा 'अश भोजने'

इष् एवं अश् धातुओं से तक प्रत्यय होता है । 'तक' यह निरनुबन्ध प्रत्यय है । वृत्ति में धातु एवं व्युत्पत्ति तथा उदाहरणार्थ अनिर्दिष्ट है । बं.सं. में उपलब्ध पाठ के आधार पर वृत्ति में कोष्ठक के अन्दर 'इषु इच्छायाम्' इत्यादि पाठ रखा गया है । इस पाठ की सङ्गति पञ्चपादी पाठ से भी होती है (द्र.उज्ज्वल.३-१४८) ।

***इष्टका*** इषु इच्छायाम् (तु.७०) । चाहना । इच्छति । इष्+तक, षकार योग में तकार को टकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, इष्टका । ईंट (पकी मिट्टी से बना हुआ, जो पक्के मकान आदि के निर्माण में लगता है) । इष्टका मृद्विकारविशेषः (मु.को.पृ.५१, पं.२८) ।

***अष्टका*** अश भोजने (क्री.४३) । खाना, भोजन करना । अश्नाति । अश्+तक, 'छशोश्च' (कात.३/६/६०) से शकार को षकार, तथा 'तवर्गस्य षटवर्गाट्टवर्गः' (कात.३/८/५) से तकार को टकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, अष्टका । श्राद्धविशेष (बं.सं.) ।

अष्टका पितृदैवत्ये सा च वैदिककर्मविशेषः (उज्ज्वल.३-१४८) । अष्टका श्राद्धभेदः, पौषादिमासत्रयाणां कृष्णाष्टम्यां श्राद्धक्रियाविशेषः (मु.को.लिङ्गानु.पृ.५३-पं.१९) ।

## १५२. [दृगृभ्यां भः[1] ।३-२५।]

'दॄ विदारणे' दृणातीति *दर्भः* कुशः पवित्रकरणम् । 'गॄ निगरणे' नाभिनालेन मातुराहारं गिलतीति *गर्भः* प्रसिद्ध-प्रसूतिकारणम्[2] ।

दॄ एवं गॄ इन दोनों धातुओं से भ प्रत्यय होता है ।

---

अश्नाति' इत्यादि अंश कोष्ठक में रख कर पाठ पूर्ति कर दी गई । इससे १६ बिन्दुओं की पूर्ति हो जाती है ।

1. This sutra is omitted in the Ms. (M.S.)
2. भ्रूणः (बं.सं.) ।

*दर्भः* दॄ विदारणे (क्री.१९) । विदारण=चीरना, फाड़ना । दृणाति । दॄ+भ, ॠ को अर्, विभक्तिकार्य, दर्भः । कुश, पवित्रकरण । अस्त्री कुशं कुथो दर्भः पवित्रम् (अ.को.२/४/१६६) ।

*गर्भः* गॄ निगरणे (तु.२२) । खाना, निगलना । नाभिनालेन मातुराहारं गिलति (जो नाभिगत नाल से माता को दिए गए आहार को खाता है) । गॄ+भ, ॠ को अर्, विभक्तिकार्य, गर्भः । प्रसिद्ध प्रसूति का कारण । गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके (वि.प्र.को.भान्त.२०) ।

## १५३. इणो यण्वत् ।३-२६।

अस्माद् भप्रत्ययो भवति स च यण्वत् । 'इण् गतौ' एति गच्छतीति *इभः* हस्ती ।

इण् धातु से भ प्रत्यय होता है तथा उसको प्रकृत सूत्र से यण्वद्भाव (=गुण का निषेध) होता है ।

*इभः* इण् गतौ (अ.१३) । एति । इ+भ, विभक्तिकार्य, इभः । हस्ती । हाथी ।

## १५४. वीपतिभ्यां तनः ।३-२७।

आभ्यां तनप्रत्ययो भवति । 'वी प्रजने' वीयते अनया *वेतना* भृतकमूल्यम् । 'पत्लृ' पतति लोकोऽस्मिन्निति *पत्तनं* नगरम् ।

बी तथा पत् धातु से तन प्रत्यय होता है ।

*वेतना* वी प्रजने (अ.१४) । प्रजन=उत्पन्न होना, गर्भ धारण करना । वीयते । वी+तन, धातुगत ईकार को गुण से एकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, वेतना । भृतकमूल्य । नौकर का वेतन (मजदूरी) ।

***पत्तनम्*** पत्लृ गतौ (भू.५५४) । पतति लोकोऽस्मिन् (जहाँ मनुष्य रहते हैं) । पत्+तन, विभक्तिकार्य, पत्तनम् । नगर ।

पत्यते सर्वैरुपभोगार्थं गम्यत इति पत्तनम् (श्वेत.वृ.३/१४४) ।

## १५५. सञ्ज्यसिभ्यां क्थिः[1] ।३-२८।

आभ्यां क्थिः प्रत्ययो भवति । ककारो यण्वद्भावार्थस्तेनागुणत्वम् । षञ्जेरनुषङ्गलोपः । 'षञ्ज सङ्गे' सज्जतीति[2] ***सक्थि*** ऊरुः । 'असु क्षेपणे' अस्यते क्षिप्यते, 'अन' मज्जादे वा नात्र(?) ***अस्थि*** शरीरावयवः ।

सञ्ज् एवं अस् धातुओं से क्थि प्रत्यय होता है । 'क्थि' में क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है । षञ्ज् में अनुषङ्ग नकार का 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) इस सूत्र से लोप होता है ।

***सक्थि*** षञ्ज सङ्गे (भू.२८८) । सङ्ग=आलिङ्गन करना, गले लगाना । 'अनिदनुबन्धाना' सूत्र से नकारलोप । सजति । सज्+क्थि, क् अनुबन्ध का अप्रयोग, 'अघोषे प्रथमः' से जकार को ककार, विभक्तिकार्य, सक्थि । उरु । हड्डी ।

***अस्थि*** असु क्षेपणे (दि.४९) । फेंकना, प्रक्षेपण करना । अस्यते । अस्+क्थि, विभक्तिकार्य, अस्थि । शरीर का अवयवविशेष ।

---

1. थिक् (बं.सं.) ।
2. सज्जति म.सं. । षञ्ज् धातु (भू.२८८) का वर्तमानकालिक एक रूप 'सजति' होता है । वृत्ति में 'सज्जति' पाठ असमीचीन है ।

## १५६. सारेरथिः ।३–२९।

अस्मादथिप्रत्ययो भवति । 'सृ गतौ' हेताविन् । अश्वान् सारयतीति *सारथिः* रथवाहः ।

इनन्त सारि धातु से अथि प्रत्यय होता है ।

***सारथिः*** सृ गतौ (भू.२७४) । 'धातोश्च हेतौ' (कात.३/२/१०) सूत्र से सृ को इन् । सारि+अथि, इन् का लोप, विभक्तिकार्य, सारथिः । रथवाह । रथ चलाने वाला । नियन्ता । सूत । सूतः क्षत्ता च सारथिः (अ.को.२/८/५९) ।

## १५७. अङ्गचतिभ्यामुलिथिः[1](उलीथी) ।३–३०।

इदित्वान्नागमः । अगि गत्यर्थः । अङ्गतीति *अङ्गुलिः* करावयवः । 'अत सातत्यगमने' अततीति *अतिथिः* अञ्चुरः [आगन्तुकः] ।

अगि तथा अत् धातुओं से क्रमशः उलि एवं इथि प्रत्यय होते हैं ।

***अङ्गुलिः***[2] अगि गत्यर्थः (भू.३८) । इदनुबन्ध के कारण न् आगम । अङ्गति । अङ्ग्+उलि, विभक्तिकार्य, अङ्गुलिः । हाथ का अवयव । करशाखा । अङ्गुली करशाखायां कर्णिकायां गजस्य च (वि.प्र.को.लान्त.१२९) ।

***अतिथिः*** अत सातत्यगमने (भू.३) । निरन्तर चलना । अतति । अत्+इथि, विभक्तिकार्य, अतिथिः । आगन्तुक । अभ्यागत । अतिथिः

---

1. उलि एवं इथि इन दोनों प्रत्ययों के विहित होने से द्विवचनान्त 'उलीथी' ऐसा पाठ होना चाहिए (द्र.बं.सं.–उरीथी) ।
2. र श्रवणात् ल भवति अङ्गुरिः–अङ्गुलिः (ति.अनु.) ।

कुशपुत्रे स्यात् पुमानागन्तुके त्रिषु (मेदिनी.थान्त.१४) । कोपे प्राघुणिकेऽपि च (थान्त.१६) ।

## १५८. नि(नी)दलिभ्यां मिः ।३–३१।

आभ्याम् मिप्रत्ययो भवति । 'णीङ् प्रापणे' नयति शकटं *नेमिः* चक्रधारा । 'दल त्रिफला' दलत्यरीन् इति *दल्मिः* शक्रायुधम् ।

नी तथा दल् धातु से मि प्रत्यय होता है ।

*नेमिः* णीञ् प्रापणे (भू.६००) । पहुँचाना । 'णो नः' से ण को न । नयति शकटम् (जो गाड़ी को खींचता है या पहुँचाता है) । नी+मि, धातुघटक ईकार को गुण से एकार, विभक्तिकार्य, नेमिः । चक्रधारा । चक्र का अवयव । नेमिर्ना तिनिशे कूपत्रिकाचक्रान्तयोः स्त्रियाम् (मेदिनी.मान्त.१७) ।

*दल्मिः* दल त्रिफला विशरणे (भू.१६५) । दलत्यरीन् (जो शत्रुओं को नष्ट करता है) । दल्+मि, विभक्तिकार्य, दल्मिः । इन्द्र का शस्त्र=वज्र ।

## १५९. ऊर्मिभूमिरश्मयः ।३–३२।

एते मिप्रत्ययान्ता निपात्यन्ते । 'ऋ गतौ' इयर्तीति *ऊर्मिः* भङ्गः । 'भू सत्तायाम्' भवति सर्वत्र *भूमिः* पृथ्वी । 'राशृ शब्दे' राशतीति[1] *रश्मिः* किरणः ।

---

1. धातु पाठ में राशृ धातु आत्मनेपद पठित है । अतः वृत्ति में राशति के स्थान पर 'राशते' पाठ होना चाहिए । पा.धा. में दन्त्य 'रासृ' पठित है ।

ऊर्मि, भूमि, रश्मि ये मि प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं ।

*ऊर्मिः* ऋ गतौ (अ.७४) । इयर्ति । ऋ+मि, ऋ को ऊर्, विभक्तिकार्य, ऊर्मिः । भङ्ग । तरङ्ग ।

ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसङ्कोचरेखायां वेदनापीडयोरपि ॥ (मेदिनी.मान्त.३) ।

*भूमिः* भू सत्तायाम् (भू.१) । भवति सर्वत्र (जो सभी जगह रहती है) । भू+मि, विभक्तिकार्य, भूमिः । पृथ्वी । भूमिर्वसुन्धरायां स्यात् स्थानमात्रेऽपि च स्त्रियाम् । (मेदिनी.,मान्त.२२) ।

*रश्मिः* राशृ शब्दे (भू.४४१) । राशते । राश्+मि, धातुघटक आकार को ह्रस्व, विभक्तिकार्य, रश्मिः । किरण । रज्जु । रश्मिः पुमान् दीधितौ स्यात् पद्मप्रग्रहयोरपि (मेदिनी.मान्त.२५) ।

## १६०. इषेः सुक् ।३–३३।

इषेर्धातोः सुक्प्रत्ययो भवति । 'इषु इच्छायाम्' इष्यते *इक्षुः* मधुरद्रव्यविशेषः ।

इष् धातु से सुक् प्रत्यय होता है । 'सुक्' में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । इससे धातु को गुण का निषेध होता है ।

*इक्षुः* इषु इच्छायाम् (तु.७०) । चाहना । इष्यते । इष्+सुक्, ष् को क्, स् को ष्, क् ष् के संयोग से क्ष्, विभक्तिकार्य, इक्षुः । विशेष मधुर द्रव्य । ईख (गन्ना, ऊख) रसाल । दन्तरसाल (बं.सं.) ।

## १६१. अवितृस्तृतन्त्रिभ्य ईः ।३–३४।

एभ्य ईप्रत्ययो भवति । 'अव रक्ष पालने' पुत्रार्थं रजोऽवतीति *अवीः* रजस्वला । 'तॄ प्लवनतरणयोः' तीर्यतेऽनया

*तरीः* नौः । 'स्तृञ् आच्छादने' स्तृणातीति *स्तरीः* आच्छादन-विशेषः । 'तन्त्रि कुटुम्बधारणे'[1] तन्त्रयतीति *तन्त्रीः* वीणा ।

अव्, तृ, स्तृञ्, तन्त्र् इन सभी धातुओं से ई प्रत्यय होता है ।

***अवीः*** अव पालने (भू.२०२) । रक्षा करना । पुत्रार्थं रजोऽवति (जो पुत्र के लिए रज की रक्षा करती है) । अव्+ई, विभक्तिकार्य, अवीः । रजस्वला ।

अवीर्नारी रजस्वला (वै.सि.कौ.उ.सू.३/४३८) । ऋतुमत्यामविः प्रोक्ता (वि.प्र.को.वान्त.२३) ।

***तरीः*** तृ प्लवनतरणयोः (भू.२८३) । पार जाना, तैरना । तीर्यते अनया । तृ+ई, 'ऋवर्णे अर्' (कात.१/२/४) से ऋृ को अर्, विभक्तिकार्य, तरीः । नौका । तरिर्नावि दशायाञ्च वस्त्रादीनाञ्च पेटके (वि.प्र.को.रान्त.८६) ।

***स्तरीः*** स्तृञ् आच्छादने (क्री.१०) । ढँकना । स्तृणाति । स्तृ+ई, ऋृ को अर्, विभक्तिकार्य, स्तरीः । आच्छादनविशेष । धूम ।

***तन्त्रीः*** तन्त्रि कुटुम्बधारणे (चु.१०१) । फैलाना, कुटुम्ब का पोषण करना । तन्त्रयति । तन्त्र्+ई, विभक्तिकार्य, तन्त्रीः । वीणा । वीणादि का गुण । तन्त्री वीणागुणे स्मृता (मेदिनी.रान्त.४२) ।

---

1. गर्भधारणे (ति.अनु.) ।

## १६२. लक्षेर्मोऽन्तश्च[1] ।३–३५।

अस्मादीप्रत्ययो भवति, मोऽन्तश्च । 'लक्ष दर्शनाङ्कनयोः' लक्षयति दर्शयति पुण्यकर्माणं *लक्ष्मीः* ।

लक्ष् धातु से ई प्रत्यय तथा म् अन्तादेश होता है ।

*लक्ष्मीः* लक्ष दर्शनाङ्कनयोः (चु.५) । १. देखना, २. चिह्न करना, सङ्केत लगाना । लक्षयति दर्शयति पुण्यकर्माणम् (जो पुण्य कर्म करने वाले को देखती है) । लक्षि+ई, लक्ष् को म् अन्तादेश, इन् का लोप, विभक्तिकार्य, लक्ष्मीः । श्रीः । लक्षेर्मुट् च (वै.सि.कौ.उ.सू.३–४४०) । लक्ष्मीः श्रीशिवसम्पत्तिपद्माशोभाप्रियङ्गुषु (वि.प्र.को.मान्त.३०) ।

## १६३. वातप्रमीः ।३–३६।

अयमीप्रत्ययान्तो निपात्यते । वातप्रपूर्वो 'मा माने' वातं प्रमातीति *वातप्रमीः* वातवाहनो मृगः ।

'वातप्रमीः' यह ई प्रत्ययान्त शब्द निपातन[2] से सिद्ध होता है ।

*वातप्रमीः* मा माने (अ.२६) । मान=नापना । वातं प्रमाति (जो हवा का मापन करता है) । वात प्र पूर्वक । वात प्र मा+ई, निपातन से आकार का लोप, विभक्तिकार्य, वातप्रमीः (स्त्री.पुं.) । हवा के समान

---

1. पाठा. लक्षेरीमोऽन्तश्च (बं.सं.३–१६७) इसमे 'ई' का पुनः पाठ अनुचित है यतः पूर्व सूत्र (३–३४) से 'ई' की अनुवृत्ति यहाँ हो जाती है इसीलिए 'लक्षेर्मुट्' (वै.सि.कौ.उ.सू.३/४४०) ऐसा सूत्रपाठ उपलब्ध होता है ।
2. निपातन, द्र०–(१–९) ।

तेज चलने वाला मृग । अतिशीघ्रगामी मृग । वातप्रमीर्वातमृगः (अ.को.२/५/७) ।

## १६४. कृगृजागृभ्यः क्विः ।३-३७।

एभ्यः क्विप्रत्ययो भवति । को यण्वत् । 'डु कृञ् करणे'[1] करोतीति *कुर्विः*[2] *(कृविः)* 'गॄ निगरणे' गिरतीति *गिर्विः*[3] *(गृविः)* छान्दसावेतौ रविचन्द्रौ । 'जागृ निद्राक्षये' जागर्तीति *जागृविः* अग्निः ।

कृ, गृ, जागृ इन धातुओं से क्वि प्रत्यय होता है । क्वि में क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है ।

***कृविः*** डु कृञ् करणे (त.७) । करोति । कृ+क्वि, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, विभक्तिकार्य, कृविः । तन्तुवायद्रव्य । तन्तुवायभाण्ड ।

***गृविः*** गृ निगरणे (तु.२२) । गिरति । गृ+क्वि, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, विभक्तिकार्य, गृविः ।

वृत्ति में कुर्विः एवं गिर्विः इन दोनों को छान्दस् कहकर इनके क्रमशः रवि एवं चन्द्र अर्थ भी किए गए हैं ।

---

1. कृञ् हिंसायाम्- कृविः तन्तुवायभाण्डम् (बं.सं.) ।
2. वृत्ति में 'कुर्विः' शब्द असाधु है । कृ धातु से क्वि प्रत्यय होने पर क् अनुबन्ध के कारण धातु को गुण नहीं हो सकता । अतः 'कृविः' शब्द ही साधु होगा । पञ्चपादी एवं बं.सं. में भी 'कृविः' पठित है । द्र०-(सरस्वती.२/१/२३५) (वै.सि.कौ.३०४-४९६) ।
3. वृत्ति में 'गिर्विः' शब्द भी असाधु है । गुण निषेध के कारण 'गृविः' शब्द ही साधु होगा । ति.अनु. में उल्लेख है कि दुर्गसिंह की दो वृत्तियाँ प्राप्त हुई । उनमें दीर्घान्त कीर्विः गीर्विः पाठ होना चाहिए किन्तु ह्रस्वान्त है । ति.अनु. ।

*जागृविः* जागृ निद्राक्षये (अ.३६) । नींद टूटना, जागना । जागर्ति । जागृ+क्वि, गुणनिषेध, विभक्तिकार्य, जागृविः । अग्नि । राजा । सुखी ।

१६५. छव्यादयः ।३-३८।

छविदर्विस्थविदीदिविकिकिदीवयः । एते क्विप्रत्ययान्ता निपात्यन्ते । 'छो छेदने' छ्यतीति[1] *छविः* कान्तिः । 'दॄ विदारणे' दृणातीति *दर्विः* तर्दूः । 'ष्ठा गतिनिवृत्तौ' तिष्ठतीति *स्थविः* तन्तुवायद्रव्यम् । 'दिवु क्रीडादिषु' दीव्यतीति *दीदिविः* स्वर्गः, द्विर्वचनम् । [दिवु क्रीडादिषु किकिपूर्वः *किकिदीविः*] । पक्षिविशेषः ।

छवि, दर्वि, स्थवि, दीदिवि, किकिदीवि ये सभी क्वि प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*छविः* छो छेदने (दि.२०) । छेदन=काटना, छेदना । छ्यति । 'सन्ध्यक्षरान्तानामाकारोऽविकरणे' (कात.३/४/२०) सूत्र से ओकार को आकार । छा+क्वि, आकार को ह्रस्व, विभक्तिकार्य, छविः । कान्ति । छविः शोभारुचोर्मता (वि.प्र.को.वान्त.२४) ।

*दर्विः* दॄ विदारणे (क्री.१९) । काटना । दृणाति । दॄ+क्वि, निपातन से दॄ में ॠ को अर् गुण, विभक्तिकार्य, दर्विः । तर्दू । चम्मच, चमची । दारुहस्त । दर्विः स्त्रियां खजाकायां फणायामुरगस्य च (मेदिनी.वान्त.५) ।

---

1. छव्यति म.सं. । छो छेदने धातु का दैवादिक 'छ्यति' रूप होता है । म.सं. में छव्यति पाठ था, जिसके स्थान पर 'छ्यति' पाठ किया गया ।

***स्थविः*** ष्ठा गतिनिवृत्तौ (भू.२६७) । रुकना, ठहरना । तिष्ठति । स्था+क्वि, धातुघटक आकार को ह्रस्व, विभक्तिकार्य, स्थविः । तन्तुवायद्रव्य ।

***दीदिविः*** दिवु क्रीडादिषु (दि.१) । दीव्यति । दिव्+क्वि, धातु को द्वित्व तथा पूर्व अभ्यास के इकार को दीर्घ, वकार का लोप, विभक्तिकार्य, दीदिविः । स्वर्ग । मोक्ष । दिवो द्वे दीर्घश्चाभ्यासस्य । दीदिविः स्वर्गमोक्षयोः (वै.सि.कौ.उ.सू.४/४९५) । पुंसि स्वर्गे दीदिविर्ना धिषणेऽन्ने तदस्त्रियाम् (मेदिनी.वान्त.३७) ।

***किकिदीविः*** किकि(पूर्वक) दिव्+क्वि, दिव् घटक इकार को दीर्घ, व् का लोप, विभक्तिकार्य, किकिदीविः । पक्षिविशेष । नीलकण्ठ । चाष । स्यादथ चाषः किकीदिविः (अ.को.२/५/१६) ।

## १६६. खञ्जेराकः[1] ।३–३९।

अस्मादाकप्रत्ययो भवति । 'खजि मन्थे' खञ्जतीति *खजाकः*[2] पक्षी ।

खञ्ज् धातु से आक प्रत्यय होता है ।

***खजाकः*** खजि मन्थे (भू.६९) । मथना । इदनुबन्ध के कारण न् आगम । खञ्जति । खञ्ज्+आक, नकार का लोप, विभक्तिकार्य,

---

1. खञ्जेरकः म.सं. । खञ्ज् धातु से आक प्रत्ययान्त 'खजाकः' शब्द प्राप्त होता है । वृत्ति में खञ्जेरकः से अक प्रत्ययान्त खञ्जकः' शब्द का निर्देश है । 'खञ्जकः' शब्द उपलब्ध नहीं होता । अतः खञ्जेरकः के स्थान पर 'खञ्जेराकः' ऐसा सूत्रपाठ किया गया । द्र.दया.उ.को.–खजेराकः (४–१३) (उज्ज्वल.४–१३) । सरस्वती.– खजिबलिपतिभ्य आकः (२/२/१२) । (अ.को.२/९/३४) ।
2. खञ्जकः के स्थान पर 'खजाकः' शब्द रखा गया ।

खजाकः । पक्षी । खजाका दर्वि (कलछुल) । खजाकः पक्षिणि ख्यातः खजाका दर्विरुच्यते (उज्ज्वल.४/१३) ।

१६७. बलाकादयः[1] ।३-४०।

बलाकपिनाकपताकश्यामाकशलाकाः । एते आकप्रत्ययान्ता निपात्यन्ते । 'वल संवरणे' वलते *बलाका* पक्षिणि । 'पिष्लृ संचूर्णने' पिनष्टीति *पिनाकं* हरधनुः । पत्लृ गतौ' पततीति *पताका* ध्वजः । 'श्यैङ् गतौ' श्यायते *श्यामाकः* धान्यं व्रीहिविशेषः । 'पल शल'[2] शलतीति *शलाका* अञ्जन–लेखनिका । नेत्राञ्जनीति ।

बलाक, पिनाक, पताक, श्यामाक, शलाक ये सभी आक प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*बलाका* वल संवरणे (भू.४१६) । आच्छादन करना, ढकना । वलते । वल्+आक, वकार को निपातन से बकार, स्त्री. में 'स्त्रियामादा' (कात.२/४/४९) सूत्र से आ प्रत्यय, विभक्तिकार्य, बलाका । पक्षी (बगुला) । बकपङ्क्तिः । कामुकी । विसकण्ठिका । बलाकः बक ।

*पिनाकम्* पिष्लृ संचूर्णने (रु.१२) । पीसना, कूटना । पिनष्टि । पिष्+आक, ष् को निपातन से नकार, विभक्तिकार्य, पिनाकम् । हरधनु । शङ्कर का धनुष । पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोः (मेदिनी.कान्त.१२०) ।

पा रक्षणे+आक, इत्व, नुम्, पिनाकः (वै.सि.कौ.४/४५५) ।

---

1. बलाकापिनाकपताकाश्यामाकशलाकाः (बं.सं.३/१७२) ।
2. पल शल गतौ (भू.५५४) ति.अनु. ।

***पताका*** पत्लृ गतौ (भू.५५४) । पतति । पत्+आक, स्त्री. में आ प्रत्यय, विभक्तिकार्य, पताका । ध्वज । सौभाग्य । अङ्क । पताका वैजयन्त्यां च सौभाग्येऽङ्के ध्वजेऽपि च (वि.प्र.को.कान्त.१७३) ।

***श्यामाकः*** श्यैङ् गतौ (भू.४५९) । श्यायते । सन्ध्यक्षर ऐकार को आकार । श्या+आक, निपातन से म् अन्तादेश, विभक्तिकार्य, श्यामाकः । धान्य । समा । व्रीहिविशेष (कोदों सांवा) ।

***शलाका*** शल गतौ (भू.५५४) । शलति । शल्+आक, स्त्री. में आ प्रत्यय, विभक्तिकार्य, शलाका । अञ्जनयष्टि । (आँख में अञ्जन लगाने की सलाई) । शलाका शल्यमदनशारिकाशल्लकीषु च । छत्रादि-काष्ठीशरयोः । (मेदिनी.कान्त.१६१) ।

## १६८. अर्तेरत्निः ।३–४१।

अस्मादत्निप्रत्ययो भवति । 'ऋ गतौ' इयर्तीति *[अरत्निः]* कनिष्ठिकाङ्गुलिः ।

ऋ धातु से अत्नि प्रत्यय होता है ।

***अरत्निः*** ऋ गतौ (अ.७४) । इयर्ति । ऋ+अत्नि, ऋ को अर्, विभक्तिकार्य, अरत्निः । कनिष्ठिका अङ्गुलि । सबसे छोटी अङ्गुली । विस्तृत छोटी अङ्गुलि वाला हाथ । अरत्निः कफणौ हस्ते सप्रकोष्ठतताङ्गुलौ (वि.प्र.को.तान्त.१२३) ।

## १६९. अञ्जेरलिः ।३–४२।

अस्मादलिप्रत्ययो भवति । 'अञ्जू व्यक्त्यादौ' अनक्तीति *अञ्जलिः* करसङ्घट्टः ।

अञ्ज् धातु से अलि प्रत्यय होता है ।

*अञ्जलिः* अञ्जू व्यक्तिम्रक्षणगतिषु (रु.१७) । (कान्ति-क्षी.त.रु.२७) साफ करना, सराहना, तैलमर्दन करना, अभ्यञ्जन करना, जाना । अनक्ति । अञ्ज+अलि, विभक्तिकार्य, अञ्जलिः । करसम्पुट । दोनों हाथों को मिलाना । पुष्पाञ्जलि । अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि (मेदिनी.लान्त.६०) ।

१७०. मृकणिभ्यामीचिः ।३-४३।

आभ्यामीचिप्रत्ययो भवति । 'मृङ् प्राणत्यागे' म्रियते तमोऽनेन *मरीचिः* किरणः । 'कण[1] गतौ' कणते[2] *कणीचिः* कलाविशेषः[3] (लताविशेषः) ।

मृ तथा कण् धातु से ईचि प्रत्यय होता है ।

*मरीचिः* मृङ् प्राणत्यागे (तु.१११) । मरना, प्राण छोड़ना । म्रियते तमोऽनेन (जिससे अन्धकार नष्ट होता है) । मृ+ईचि, ऋ को अर्, विभक्तिकार्य, मरीचिः । किरण । कृपण । मरीचिः कृपणे दीप्तावृषिभेदेऽपि दृश्यते (वि.प्र.को.चान्त.१५) । मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम् (मेदिनी.चान्त.१६) ।

*कणीचिः* कण गतौ (भू.१४६) । कणति । कण्+ईचि, कणीचिः । लताविशेष । पत्रादियुक्तशाखा । पुष्पितलता । गुञ्ज । शकट । निनाद । कणीची पुष्पितलतागुञ्जयोः शकटे स्त्रियाम् (मेदिनी.चान्त.१३) ।

---

1. कण रण इति दण्डको धातुः (ति.अनु.) ।
2. कणते । कण् धातु वर्तमान उपलब्ध धातुपाठ के अनुसार परस्मैपद है (भू.१४६, ५१४) । अतः वृत्ति में कणते के स्थान पर 'कणति' पाठ होना चाहिए ।
3. कलाविशेष म.सं. । कणीचि का अर्थ लता होता है । वृत्ति में 'कला' यह लता का ही भ्रष्ट पाठ है । अतः 'कलाविशेषः' के स्थान पर 'लताविशेषः' पाठ समझना चाहिए ।

१७१. रातेस्त्रिः ।३-४४।

अस्मात्त्रिप्रत्ययो भवति । 'रा ला दाने' रात्रिचराणां प्रतीतिं ददातीति *रात्रिः* क्षपा ।

रा धातु से त्रि प्रत्यय होता है ।

***रात्रिः*** रा दाने ((अ.२२) । देना । रात्रिचराणां प्रतीतिं ददाति (जो रात्रि में घूमने वालों का आभास देती है) । रा+त्रि, विभक्तिकार्य, रात्रिः । क्षपा । वैकल्पिक ई प्रत्यय, रात्री ।

रा+त्रिप्, रात्रिः (श्वेत.वृ.४-६९) ।

१७२. दूषेरिकः ।३-४५।

अस्मादिकप्रत्ययो भवति । 'दुष वैकृत्ये' हेताविन् । दूषयतीति *दूषिका* नेत्रमलम् । 'दुषे कारिते' इत्युपधाया ऊत्वम् ।

दूषि धातु से इक प्रत्यय होता है ।

***दूषिका*** दुष वैकृत्ये (दि.२८) । वैकृत्य=दूषित होना, दूषित करना । धातोश्च हेतौ (कात.३/२/१०) इस सूत्र से हेतु में इन्, दूषयति । दुषि+इक, 'दुषेः कारिते' (कात.३/४/६४) । सूत्र से उपधाभूत उकार को दीर्घ ऊकार, इन् का लोप, स्त्री. में आ प्रत्यय, विभक्तिकार्य, दूषिका । नेत्रमल । आँख का कीचड़ । दूषिका तूलिकायाञ्च दूषिका नेत्रयोर्मले (वि.प्र.को.कान्त.१७६) । दूषि+ईकन्, दूषीका (वै.सि.कौ.४/४५६) ।

## १७३. कृतॄभ्यामीषः ।३-४६।

आभ्यामीषप्रत्ययो भवति । 'डु कृञ् करणे'[1] गृहशोभां करोतीति *करीषः* शुष्कगोमयम् । 'तॄ प्लवनतरणयोः' तरतीति *तरीषः* शोभनम् ।

कृ एवं तॄ धातु से ईष प्रत्यय होता है ।

***करीषः*** डु कृञ् करणे (त.७) । गृहशोभां करोति (जो घर की शोभा बनाता है) । कृ+ईष, ऋ को अर् गुण, विभक्तिकार्य, करीषः । सूखा गोबर । तत्तु शुष्कं करीषोऽस्त्री (अ.को.२/९/५१) ।

कीर्यते विक्षिप्यते करीषः (दया.उ.को.४/२७) ।

***तरीषः*** तॄ प्लवनतरणयोः (भू.२८३) । तरति । तॄ+ईष, ॠ को अर्, विभक्तिकार्य, तरीषः । शोभन । सुन्दर । तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः (मेदिनी.षान्त.३७) ।

## १७४. शिरीषादयः[2] ।३-४७।

शिरीषपुरीषर्जीषाम्बरीषाः । एते ईषप्रत्ययान्ता निपात्यन्ते । 'शॄ हिंसायाम्' शृणातीति *शिरीषः* वृक्षः । 'पॄ पालनपूरणयोः' पालयति प्राणान् परिणामनिष्कासेन *पुरीषं* विष्ठा । 'ऋजि भृजी भर्जने' ऋज्यते *ऋजीषं* पशुवचनम्, वृथापाको वा । 'वृञ् वरणे' अंपूर्वः । अं आकाशं वृणोतीति *अम्बरीषः* भ्राष्ट्रः । एवमन्येऽप्यनुसर्तव्याः ।

शिरीष, पुरीष, ऋजीष, अम्बरीष ये सभी ईष प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं ।

---

1. कॄ विक्षेपे बं.सं. ति.अनु. ।
2. शिरीषादयश्च बं.सं. ।

*शिरीषः* शृ हिंसायाम् (क्री.१५) । शृणाति । शृ+ईष, 'ऋदन्तस्येरगुणे' सूत्र से ॠ को इर्, विभक्तिकार्य, शिरीषः । वृक्ष । सिरस का पेड़, फूल । शिरीषस्तु कपीतनः (अ.को.२/४/६३) ।

*पुरीषम्* पृ पालनपूरणयोः (अ.७०, क्री.१६) । पिपर्ति प्राणान् परिणामनिष्कासेन (जो अन्तस्थ मल के निष्कासन से प्राणों की रक्षा करता है) । पृ+ईष, ॠ को उर्, विभक्तिकार्य, पुरीषम् । विष्ठा । मल ।

*ऋजीषम्* ऋजि भर्जने (भू.३४६) । भर्जन=भूंजना, पकाना । ऋज्यते । ऋज्+ईष्, निपातन से गुणाभाव, विभक्तिकार्य, ऋजीषम् । पशुवचन या वृथापाक । तवा । मैथुन, अपवाद (बं.सं.) । ऋजीषं पिष्टपचनम् (अ.को.२/९/३२) ।

*अम्बरीषः* वृञ् वरणे (सु.८) । अं आकाशं वृणोति (जो आकाश का वरण करता है) । अं वृ+ईष, ऋ को अर्, व् को ब्, अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, अम्बरीषः[1] । भ्राष्ट्र । आकाश । भाँड ।

## १७५. कॄशॄशौण्डॄभ्य ईरः[2] ।३-४८।

एभ्य ईरप्रत्ययो भवति । 'कॄ विक्षेपणे' किरतीति *करीरः* वृक्षः । 'शॄ हिंसायाम्' शीर्यते *शरीरं* कायः । 'शौण्डॄ (शौटॄ) गर्वे' शौण्डतीति (शौटति) *शौण्डीरः* (शौटीरः) सत्यवान् दाता ।

कॄ शॄ एवं शौण्डॄ धातुओं से ईर प्रत्यय होता है ।

---

1. अम्बरीषं रणे भ्राष्ट्रे क्लीबं पुंसि नृपान्तरे । नरकस्य प्रभेदे च, किशोरे भास्करेऽपि च ॥ (मेदिनी.षान्त.४८-४९)
2. कॄशॄशौटिभ्य ईरः (बं.सं. ३-१८०) ।

***करीरः*** कॄ विक्षेपे (तु.२१) । फेंकना । किरति । कॄ+ईर, ॠ को ईर्, विभक्तिकार्य, करीरः । वृक्ष । वंशाङ्कुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान् । (मेदिनी.रान्त.१२५) ।

***शरीरम्*** शॄ हिंसायाम् (क्री.१५) । नष्ट करना, मारना । शीर्यते । शॄ+ईर, ॠ को अर्, विभक्तिकार्य शरीरम् । काय ।

***शौटीरः*** शौटृ गर्वे (शौटृ भू.८०) । गर्व करना, घमण्ड करना । शौटति । शौट्+ईर, शौटीरः । सत्यवान् । दाता । गर्वी । गर्वत्याग, वीर (बं.सं.) । शौटीरः ।

**१७६. क्षीरोशीरगम्भीराः ।३-४९।**

एते ईरप्रत्ययान्ता निपात्यन्ते । 'क्षणु हिंसायाम्' क्षणोतीति *क्षीरं* पयः । 'वश कान्तौ वष्टीति उशीरम् । सम्प्रसारणं निपातनात् । अथवा उश्यते काम्यते *उशीरं* गन्धद्रव्यम् । 'गम्लृ गतौ' गच्छतीति *गभीरः* अगाधः । *गम्भीरः* स एव ।

क्षीर, उशीर, गभीर, गम्भीर ये सभी ईर प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं ।

***क्षीरम्*** क्षणु हिंसायाम् (त.३) । क्षणोति । क्षण्+ईर, निपातन से ण् का लोप तथा धातुघटक अकार का लोप, विभक्तिकार्य, क्षीरम् । पय । दूध ।

तु.- घसेः किच्च, घस्लृ अदने, चकारात् किच्च । कित्वात् 'गमहन्' इत्यादिना लोपः । 'शासिवसि' इति षत्वम् । क्षीरम् (श्वेत.वृ.४/३५) । क्षीरं दुग्धे जले (मेदिनी.रान्त.१६) ।

***उशीरम्*** वश कान्तौ (अ.३) । चाहना, इच्छा करना । वष्टि । वश्+ईर, निपातन से वकार को सम्प्रसारण से उकार, विभक्तिकार्य, उशीरम् । गन्धद्रव्य । वीरणमूल (खस खस) अथवा उश्यते, काम्यते

(कर्म) उशीरम् । स्याद् वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् (अ.को.२/४/१६४) ।

*गभीरः* गम्लृ गतौ (भू.२७९) । गच्छति । गम्+ईर, निपातन से भ अन्तादेश तथा विकल्प से म् का लोप[1], विभक्तिकार्य, गभीरः । अगाध । अथाह ।

म् लोप के अभाव में अनुस्वार, पञ्चम वर्ण, गम्भीरः । अगाध । शान्त, जलाशय ।

## १७७. अगिश्रुश्रियुवहिभ्यो निः ।३–५०।

एभ्यो धातुभ्यो निःप्रत्ययो भवति । 'अक अग कुटिलायां गतौ' अगति वायुवशादूर्ध्वं गच्छतीति *अग्निः* अनलः । 'श्रु श्रवणे' श्रूयते *श्रोणिः* कटिप्रदेशः । 'श्रिञ् सेवायाम्' श्रयतीति *श्रेणिः* पङ्क्तिः । 'यु मिश्रणे' यौतीति *योनिः* गुणोत्पत्ति–स्थानम् । 'वह प्रापणे' उह्यत इति *वह्निः* दहनः ।

अग्, श्रु, श्रिञ् यु, वह् इन धातुओं से नि प्रत्यय होता है ।

*अग्निः* अग कुटिलायां गतौ (भू.५१३) । घूमना, टेढा होना । अगति वायुवशादूर्ध्वं गच्छति (जो हवा के द्वारा ऊपर की ओर जाता है) । अग्+नि, विभक्तिकार्य, अग्निः । अनल । अङ्गति गच्छति देवानामग्रे हविरादानाय इति अग्निः (श्वेत.वृ.४/५२) । अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान् (मेदिनी.नान्त.१) ।

*श्रोणिः* श्रु श्रवणे (भू.२७८) । सुनना । श्रूयते । श्रु+नि, श्रु में उकार को गुण से ओकार, तथा नकार को णकार, विभक्तिकार्य, श्रोणिः । कटिप्रदेश । कमर । जघनप्रदेश (श्वेत.वृ.४/५३) ।

---

1. पक्षे मकारलोपः, अन्यत्र तु अनुस्वारः (ति.अनु.) ।

***श्रेणिः*** श्रिञ् सेवायाम् (भू.२६८) । सेवा करना । श्रयति । श्रि+नि, इकार को एकार गुण, नकार को णकार, विभक्तिकार्य, श्रेणिः । पङ्क्ति । श्रेणिः पङ्क्तौ सेकपात्रे श्रेणिः स्यात् कारुसंहतौ (वि.प्र.को.णान्त.२४) ।

***योनिः*** यु मिश्रणे (अ.६) । मिलना, जुड़ना । यौति । यु+नि, धातुघटक उकार को ओकार गुण, विभक्तिकार्य, योनिः । गुणोत्पत्तिस्थान । उपस्थेन्द्रिय । भग । योनिः स्यादाकरे भगे (वि.प्र.को.नान्त.२१) । योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे (मेदिनी.नान्त.१६) ।

***वह्निः*** वह प्रापणे (भू.६१०) । पहुँचाना, ढोना । उह्यते । वह्+नि, वह्निः । दहन । आग ।

## १७८. सृणिवेणिवृष्णिधृष्णि[1]पार्ष्णिचूर्णयः ।३–५१।

एते निप्रत्ययान्ता निपात्यन्ते । 'सृ गतौ' सरतीति *सृणिः* अङ्कुशः । 'वी प्रजने' वेतीति *वेणिः* केशबन्धः । 'वृषु सेचने' वर्षतीति *वृष्णिः* यादवविशेषः । 'ञि धृषा प्रागल्भ्ये' धृष्णोतीति *धृष्णिः* वशविशेषः[2] (?) 'पृषु सेचने' पृष्यत इति *पार्ष्णिः* पादग्रन्थिः पादपश्चादवस्थानम् । 'चर गत्यर्थः' चरतीति *चूर्णिः* ग्रन्थविशेषः ।

सृणि, वेणि, वृष्णि, धृष्णि, पार्ष्णि, चूर्णि ये सभी नि प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

---

1. 'धृष्णिः' शब्द बं.सं. (३/१८३) ति.अनु. में असंगृहीत है । पा.उ. में 'घृष्णिः' पठित है ।
2. यहाँ 'वशविशेषः'(?) ऐसा सन्दिग्ध पाठ है । 'घृष्णिः' का गभस्तिघृणिघृष्णयः' (अ.को.१/४/३३) के अनुसार किरण अर्थ होता है । सम्भव है 'धृष्णि' नामक कोई वंश रहा हो अतः यहाँ अनुस्वार घटित पाठ होना चाहिए ।

***सृणिः*** सृ गतौ (भू.२७४) । सरति । सृ+नि, निपातन से गुण का अभाव, नकार को णकार, विभक्तिकार्य, सृणिः । अङ्कुश ।

***वेणिः*** वी प्रजनकान्तिगतिषु च (अ.१४) । वेति । वी+नि, धातुघटक ईकार को गुण से एकार, निपातन से नकार को णकार, विभक्तिकार्य, वेणिः । केशबन्ध । केशविन्यास । बालों की गुथी हुई चोटी । जननी ।

स्त्री.- वेणी । वेणी कचस्य बन्धे स्यान्नदीनां मेलकेऽपि च (वि.प्र.को.णान्त.२५) । वेणिः प्रवेणिः (अ.को.२/६/९८) ।

***वृष्णिः*** वृषु सेचने (भू.२२६) । सींचना, बरसना । वर्षति । वृष्+नि, निपातन से गुण का अभाव, नकार को णकार, विभक्तिकार्य, वृष्णिः । यादवविशेष । भेंड ।

वृष्णिः क्षत्रियमेषयोः (वै.सि.कौ.उ.सू.४/४८९) । वृष्णिः पाखण्ड–चन्द्रयोः । त्रिषु ना यादवे मेषे (मेदिनी.णान्त.२८) ।

***धृष्णिः*** ञि धृषा प्रागल्भ्ये (सु.१८) । प्रागल्भ्य= गर्व करना, अपने को बड़ा मानना । धृष्णोति । धृष्+नि, गुणाभाव, नकार को णकार, विभक्तिकार्य, धृष्णिः । किरण । गभस्तिघृणिधृष्णयः (अ.को.१/३/३३) ।

***पार्ष्णिः*** पृषु सेचने (भू.२२६) । पृष्यते । पृष्+नि, निपातन से ऋ को आर् वृद्धि, नकार को णकार, विभक्तिकार्य, पार्ष्णिः । पादग्रन्थि । पादतल । चरण का अधोभाग । पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च (मेदिनी.णान्त.२०) ।

***चूर्णिः*** चर गत्यर्थः (भू.१८९) । चरति । चर्+नि निपातन से उपधाभूत अकार को ऊकार, नकार को णकार, विभक्तिकार्य, चूर्णिः । ग्रन्थविशेष । गद्य । पतञ्जलि कृत महाभाष्य । कपर्दकशत । चूर्णिः शाणी द्रुणी दरत् (अ.को.३/५/९) ।

१७९. पातेर्डतिः[1] ।३–५२।

अस्माड्डतिः प्रत्ययो भवति । 'पा रक्षणे' पातीति *पतिः* स्वामी ।

पा धातु से डति प्रत्यय होता है । डति में ड् अनुबन्ध है । ड् अनुबन्ध के कारण धातुस्वरादि का लोप होता है ।

*पतिः* पा रक्षणे (अ.२१) । पाति (पत्नीम्) (जो पत्नी की रक्षा करता है) । पा+डति, ड् अनुबन्ध के कारण 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) इस सूत्र से धातुघटक आकार का लोप, विभक्तिकार्य, पतिः । स्वामी । भर्ता । पतिः प्रभौ गतौ मूले (वि.प्र.को.तान्त.४८) । पतिर्धवे ना त्रिष्वीशे प्राप्तं लब्धे समञ्जसे (मेदिनी.तान्त.३२) ।

१८०. भूस्वदिभ्यः[2] क्रिः ।३–५३।

एभ्यः क्रिः प्रत्ययो भवति । को यण्वद्भावार्थः । 'भू सत्तायाम्' भवतीति *भूरि* प्रभूतम् । 'षूङ् प्राणिगर्भविमोचने' सूते बुद्धिं *सूरिः* पण्डितः । 'अद प्सा भक्षणे' खमत्तीति *अद्रिः* पर्वतः ।

भू, सू, अद् इन धातुओं से क्रि प्रत्यय होता है । 'क्रि' में क् अनुबन्ध यण्वद्भावार्थ है । 'रि' शेष रहता है ।

1: पातेर्डतः ति.अनु. । तिब्बती में 'डति' पाठ होना चाहिए ।
2. भूस्वद्यङ्घिग्रभ्यः (बं.सं.३–१८०) बं.सं. में 'अङ्घ्रिः' (=चरण) शब्द अतिरिक्त पठित है । म.सं. में आगे 'अंहे रिः' (५–३१) सूत्र से यह शब्द निष्पादित है ।

*भूरि* भू सत्तायाम् (भू.१) । होना । भवति । भू+क्रि, क् अनुबन्ध का अप्रयोग, तथा उससे यण्वद्भाव के कारण 'भू' में ऊ को गुणनिषेध, नपुं. सि, सि का लोप, भूरि[1] । प्रभूत ।

*सूरिः* षूङ् प्राणिगर्भविमोचने (अ.५४) । गर्भ उत्पन्न करना । जनना । 'धात्वादेः षः सः' से ष् को स् । सूते बुद्धिम् (जो बुद्धि का सृजन करता है) । सू+क्रि, क् अनुबन्ध से यण्वद्भाव के कारण गुण का निषेध, विभक्तिकार्य, सूरिः । पण्डित । विद्वान् । धीमान् सूरिः कृती (अ.को.२/७/६) ।

*अद्रिः* अद भक्षणे (अ.१) । खाना । खम् अत्ति (जो आकाश को घेर लेता है) । अद्+क्रि, क् अनुबन्ध का अप्रयोग, विभक्तिकार्य, अद्रिः । पर्वत । अद्रिः शैलद्रुमार्केषु (वि.प्र.को.रान्त.८३) ।

## १८१. पृणातेः कुषः ।३-५४।

अस्मात् कुषप्रत्ययो भवति । कोऽनुबन्धः । 'पृ पालनपूरणयोः' पृणाति पूरयति स्त्रीणामुदरं गर्भेणेति **पुरुषः** । पुमान् ।

पृ धातु से कुष प्रत्यय होता है । 'कुष' में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । 'उष' शेष रहता है ।

*पुरुषः* पृ पालनपूरणयोः (क्री.१६) । पालन करना, भरना, पूर्ण करना । पृणाति=पूरयति स्त्रीणाम् उदरं गर्भेण (जो गर्भ से स्त्री के उदर की पूर्ति करता है) । पृ+कुष्, क् अनुबन्ध के कारण धातु को गुण का निषेध, 'उरोष्ठ्योपधस्य च' (कात.३/५/४३) सूत्र से ॠ को उर्,

---

1. भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि ।
नपुंसकं सुवर्णे च, प्राज्ये स्याद् वाच्यलिङ्गकः ॥
(मेदिनी.रान्त.७३-७४)

विभक्तिकार्य, पुरुषः । मनुष्य । पुरुषः पूरुषे साङ्ख्यज्ञे च पुंनागपादपे (वि.प्र.को.षान्त.१६) ।

पुरः कुषन् (वै.सि.कौ.४/५/१४) । पुर अग्रगमने, पुरुषः । अन्येषामपि दृश्यते (पा.सू.६/३/१३७) इति दीर्घः पूरुषः ।

## १८२. हन्तेरूषः[1] ।३–५५।

हन्तेर्धातोः ऊषप्रत्ययो भवति । 'हन हिंसागत्योः' हन्तीति *हनूषः* राक्षसविशेषः ।

हन् धातु से ऊष प्रत्यय होता है ।

**हनूषः** हन हिंसागत्योः (अ.४) । मारना, हिंसा करना, जाना । हन्+ऊष, विभक्तिकार्य, हनूषः । राक्षसविशेष । दस्यु ।

## १८३. मञ्जूषादयः ।३–५६।

मञ्जूषगण्डूषपीयूषाटरूषाः । एते ऊषप्रत्ययान्ता निपात्यन्ते । 'मचि धारणोच्छ्रायपूजनेषु' मञ्चते *मञ्जूषा* पेटा । 'गडि वदनैकदेशे' गण्डतीति *गण्डूषं* कर–[मुख] वारि । 'पीङ् पाने' पीयते इति *पीयूषम्* अमृतम् । 'ऋ गतौ' आटपूर्वः । आटम् इयर्तीति *आटरूषः* वासा ।

मञ्जूषा, गण्डूष, पीयूष, आटरूष ये सभी ऊष प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

---

1. हतेरूषः म.सं. । बं.सं. तथा ति.अनु. में ([illegible]) 'हन्तेरूषः' पाठ है । म.सं. में हतेरूषः' पाठ असङ्गत है । हन् धातु का श्तिप् प्रत्ययान्त 'हन्ति' ही होगा । अतः 'हतेरूषः' के स्थान पर 'हन्तेरूषः' पाठ किया गया ।

*मञ्जूषा* मचि धारणोच्छ्रायपूजनेषु (भू.३४२) । १. धारण करना, २. ऊँचा उठाना, ३. पूजा करना । मञ्चते । मञ्च्+ऊष, निपातन से चकार को जकार, नकार को अनुस्वार, पञ्चम वर्ण, स्त्री. में आ प्रत्यय, विभक्तिकार्य, मञ्जूषा । पेटी । पिटकः पेटकः पेटा मञ्जूषा (अ.को.२/१०/२९) ।

*गण्डूषम्* गडि वदनैकदेशे (भू.१३१) । गालों में रोग होना, मुख का एकदेश । गण्डति । गण्ड्+ऊष, विभक्तिकार्य, गण्डूषम् । पानी से मुख भरना (कुल्ला) । मुखपूरण ।

गण्डूषो मुखपूर्तीभपुष्करप्रसृतोन्मिते (मेदिनी.षान्त.३५) । उन्नतनाभिस्तु गण्डूषा (अ.को.रामाश्रमी.३/५/१०) ।

*पीयूषम्* पीङ् पाने (दि.९०) । पीना । पीयते । पी+ऊष, निपातन से य् आगम[1], विभक्तिकार्य, पीयूषम् । अमृत । पीयूषं सप्तदिवसावधि क्षीरे तथाऽमृते (मेदिनी.षान्त.४१) ।

पीय इति सौत्रो धातुः अस्मादूषन्, पीयूषम् (उज्ज्वल.४/७६) । (पेयूषो) पीयूषोऽभिनवं पयः (अ.को.२/९/५४) ।

*आटरूषः* ऋ गतौ (अ.७४) । आटम् इयर्ति । आट ऋ+ऊष, निपातन से ऋ को र्, विभक्तिकार्य, आटरूषः । वासा । निवासस्थान । वस्त्र । पाश ।

## १८४. शकादिभ्योऽटः ।३–५७।

एवमादिभ्योऽटः प्रत्ययो भवति । 'शक्लृ शक्तौ' शक्नोति गन्तुमनेन *शकटः* स्यन्दनः । 'अव रक्ष पालने' अवतीति *अवटः* गर्तः । 'सृ गतौ' सरतीति *सरटः* कृकलासः । 'डु

---

1. यान्तादेशः (ति.अनु.३–१८३) ।

कृञ् करणे' करोति मदं करटः[1] गजकपोलः । एवमन्येऽप्यनुसर्तव्याः ।

शक् आदि धातुओं से अट प्रत्यय होता है ।

*शकटः* शक्लृ शक्तौ (सु.१५) । समर्थ होना, शक्तिमान् होना । शक्नोति गन्तुमनेन (जिससे जाया जा सकता है) । शक्+अट, विभक्तिकार्य, शकटः । गाड़ी । स्यन्दन । रथ । ऋषि । शकटोऽस्त्रियाम् (अ.को.२/८/५२) ।

*अवटः* अव पालने (भू.२०२) । अवति । अव्+अट, अवटः । गर्त । गड्डा । अवटः स्यात् खिले गर्ते कूपे कुहकजीविनि (वि.प्र.को.टान्त.३०) ।

*सरटः* सृ गतौ (भू.२७४) । सरति । सृ+अट, ऋ को अर्, विभक्तिकार्य, सरटः । कृकलास (छिपकली) गिरगिट । सरटः कृकलासः स्यात् (अ.को.२/५/१२) ।

*करटः* डु कृञ् करणे (त.७) । करोति मदम् (जो मद करता है) । कृ+अट, ऋ को अर्, विभक्तिकार्य, करटः[2] । गजकपोल ।

इसी प्रकार के शब्दों को अट प्रत्यय से निष्पन्न कर लेना चाहिए ।

यथा–वरटः कीटभेद । देवटः शिल्पी । कपटः माया । चप सान्त्वने, पृषोदरादि– नियमानुसार एत्व, चपेटचपेटौ तले । मयटः प्रासाद । (उज्ज्वल.४–८१) ।

---

1. उपर्युक्त शब्द ति.अनु. में अप्राप्त है ।
2. करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीवने ।
एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे ॥
करटो वाद्यभेदेऽथ (मेदिनी.टान्त.३६–३७) ।

## १८५. जटामर्कटौ ।३-५८।

एतावटप्रत्ययान्तौ निपात्येते । 'जनी प्रादुर्भावे' केशेषु जायन्ते *जटा* केशसमूहः । 'मृङ्[1] प्राणत्यागे' म्रियते *मर्कटः* कपिः । अथवा मर्क इति सौत्रोऽयं धातुः । मर्कतीति मर्कटः ।

जटा, मर्कट ये दोनों अट प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***जटा*** जनी प्रादुर्भावे (दि.९४) । पैदा होना । केशेषु जायन्ते (जो केशों में उत्पन्न होते हैं) जन्+अट, निपातन से धातुघटक अन् का लोप, स्त्री. में आ प्रत्यय, विभक्तिकार्य, जटा । केशसमूह । जटा लग्नकचे मूले प्लक्षमाक्षिकयोर्जटी (वि.प्र.को.टान्त.२५) ।

तु.- जनेष्टन्नलोपश्च (वै.सि.कौ.उ.सू.५/७०८) ।

***मर्कटः*** मृङ् प्राणत्यागे (तु.१११) । मरना, प्राण छोड़ना । म्रियते । मृ+अट, ऋ को अर्, क् आगम्, विभक्तिकार्य, मर्कटः । कपि । बन्दर । मर्कटस्तूर्णनाभेऽपि कपौ स्त्रीकरणेऽपि च (वि.प्र.को.रान्त.५३) ।

मर्क् (सौत्र धातु) + अट, मर्कटः ।

## १८६. वहलादिभ्य इत्रोत्रौ ।३-५९।

एवमादिभ्यो यथासङ्ख्यम् इत्र उत्र इत्येतौ प्रत्ययौ भवतः । 'वह प्रापणे' वहतीति *वहित्रम्* पोतः । 'रा ला दाने' लातीति *लोत्रम्* अपहृतं द्रव्यम् । एवमादयोऽप्यनुसर्तव्याः ।

---

1. मृङो गुणः कान्तश्च (ति.अनु.३-१८५) ।

वह् एवं ला आदि धातुओं से क्रमशः इत्र तथा उत्र प्रत्यय होते हैं ।

**वहित्रम्** वह प्रापणे (भू.६१०) । पहुँचाना, ढोना । वह्+इत्र, विभक्तिकार्य, वहित्रम् । पोत । जहाज ।

***लोत्रम्*** ला दाने (अ.२२) । देना, ग्रहण करना । लाति । ला+इत्र, गुण से ओकार, विभक्तिकार्य, लोत्रम् । अपहृत द्रव्य । चोर का चिह्न ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी इत्र अथवा उत्र प्रत्यय के द्वारा सिद्ध कर लेना चाहिए । यथा–अशित्रम् चरु । कटित्रम् कवचभेद । वधित्रम् मन्मथ । वरुत्रम् प्रावरण । अमित्रः शत्रु । (उज्ज्वल.४–१७२,१७३) ।

## १८७. खर्जिकृपिमसिपिञ्जादिभ्य[1] ऊरोलौ ।३–६०।

एवमादिभ्य ऊर–ऊल इत्येतौ प्रत्ययौ भवतः । 'खर्ज मार्जने' खर्जतीति *खर्जूरः* वृक्षविशेषः । 'कृपू सामर्थ्ये' कल्पते *कर्पूरः* गन्धद्रव्यम् । 'मसी परिणामे' मस्यतीति *मसूरः* धान्यविशेषः[2] । पिञ्ज इति सौत्रोऽयं धातुः । पिञ्जतीति *पिञ्जूरः* अक्षिरोगः । 'लगिः गत्यर्थः' लङ्गयतीति *लाङ्गूलं* पुच्छम् । उणादित्वाल्लङ्गेर्दीर्घत्वम् । इत्यादयोऽप्यनुसर्तव्याः ।

खर्ज्, कृप्, मस्, धातुओं से ऊर तथा पिञ्ज् आदि से ऊल प्रत्यय होते हैं ।

---

1. खर्जिपिञ्जादिभ्य ऊरोलौ (बं.सं.३–१९२), (ति.अनु.३/१८७) । बं.सं. एवं ति.अनु. में कृपि एवं मसि असंगृहीत हैं ।
2. व्रीहिविशेषः बं.सं. ।

*खर्जूरः* खर्ज मार्जने (भू.६७, व्यथने) । साफ करना, दुःखित होना । खर्जति । खर्ज्+ऊर, विभक्तिकार्य, खर्जूरः । वृक्षविशेष । खर्जूरं रुप्यफलयोः वृश्चिके ना द्रुमे द्वयोः (मेदिनी.रान्त.१४६) । खर्जूरः वनस्पतिविशेषः (श्वेत.वृ.४–९६) ।

*कर्पूरः* कृपू सामर्थ्ये (भू.४८८) । शक्तिमान् होना, समर्थ होना । कल्पते । कृप्+ऊर, ऋ को अर्, विभक्तिकार्य, कर्पूरः । गन्धद्रव्य । घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका । कर्पूरमस्त्रियाम् । (अ.को.२/६/१२९,१३०) ।

*मसूरः* मसी परिणामे (दि.६०) । आकार बदलना, रूपान्तर करना । मस्यति । मस्+ऊर, मसूरः । धान्यविशेष । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति (वि.प्र.को.सान्त.२१५) ।

*पिञ्जूरः* पिञ्ज् (सौत्रधातु.–पिजि हिंसादाननिकेतनेषु चु.२५) । पिञ्ज्+ऊर, पिञ्जूरः । अक्षिरोग । पिञ्जूलं कुशवर्तिः (वै.सि.कौ.उ.सू.५३०) ।

*लाङ्गूलम्* लगि गत्यर्थः (भू.३८) । इदनुबन्ध से न् आगम । लङ्गति । लङ्ग+ऊल, उणादि होने से धातु को दीर्घ, विभक्तिकार्य, लाङ्गूलम् । पुच्छ । पूंछ । पुच्छोऽस्त्री लूमलाङ्गूले (अ.को.२/८/५०) ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी ऊर–ऊल प्रत्ययों के द्वारा निष्पन्न कर लेना चाहिए ।

यथा- धुस्तूरः धतूर । वल्लूरम् शुष्कमांस । शालूरः मण्डूक, कस्तूरः सुगन्ध । शार्दूलः व्याघ्र । दुकूलम् स्त्रियों का अधोवस्त्र । कुसूलः धान्यपात्र ।

१८८. सर्त्तेर्वः ।३-६१।

अस्माद् वप्रत्ययो भवति । 'सृ गतौ' सरतीति सर्वं कृत्स्नम् ।

सृ धातु से व प्रत्यय होता है ।

*सर्वम्* सृ गतौ (भू.२७४) । सरति । सृ+व, ऋ को अर्, विभक्तिकार्य, सर्वम् । कृत्स्न । सम्पूर्ण ।

१८९. उल्वादयः[1] ।३-६२।

उल्बनिम्बविम्बशुल्बाः । एते ब[2]- (व) प्रत्ययान्ता निपात्यन्ते । 'ऋ गतौ' इयर्त्तीति *उल्बं* जरायुः । 'णीञ् प्रापणे' नयते *निम्बः* वृक्षः । 'वी प्रजने' वेतीति *बिम्बं* प्रतिरूपम् । 'शल गतौ' शलतीति *शुल्बं* ताम्रम् । एवमन्येऽप्यनुसर्तव्याः ।

---

1. उल्बनिम्बशुल्बविम्बाः (बं.स.३-९९४) ति.अनु. में उक्त शब्द संगृहीत नहीं है ।
2. म.सं. में ब प्रत्यय का निर्देश है । पूर्व सूत्र (१८८) से व प्रत्यय होता है । तदनुसार यहाँ 'व' की ही अनुवृत्ति होगी । अतः प्रकृत सूत्र से भी 'व' प्रत्यय कहना चाहिए । वै.सि.कौ. में भी शमेर्बन् (४/५३४) से 'उल्बादयः' (४/५३५) सूत्र में 'बन्' की अनुवृत्ति होती है । तदनुसार यहाँ भी 'व' प्रत्यय ही कहना चाहिए । 'उल्ब' आदि की सिद्धि हेतु निपातन से व को ब कर लेना चाहिए ।

उल्ब, निम्ब, विम्ब, शुल्ब ये सभी व प्रत्ययान्त शब्द निपातन से सिद्ध होते है । जो शब्द सूत्रों के अनुसार सिद्ध नहीं होते हैं उन्हें निपातन से सिद्ध कर लिया जाता है ।

**उल्बम्** ऋ गतौ (अ.७४) । इयर्ति । ऋ+व, निपातन से व को ब, ऋ को उल्, विभक्तिकार्य, उल्बम् । जरायु । गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् (अ.को.२/६/३८)।

*निम्बः* णीञ् प्रापणे (भू.६००) । णो नः से ण को न । नयति । नी+व, निपातन से व को ब, उपधाभूत ईकार को ह्रस्व, तथा न् आगम, अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, निम्बः । वृक्ष (नीम) । निम्बः स्यात् पिचुमर्दे च तिक्तके च चिरायते (वि.प्र.को.बान्त.१) ।

*विम्बः* वी प्रजने (अ.१४) । गर्भ धारण करना । वेति । वी+व, निपातन से व को ब, धातुघटक ईकार को ह्रस्व, न् आगम, अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, बिम्बः । प्रतिरूप । बिम्बोऽस्त्री मण्डलं त्रिषु (अ.को.१/३/१५) । विम्बं फले बिम्बिकायां प्रतिबिम्बे च मण्डले (वि.प्र.को.बान्त.२) ।

*शुल्बम्* शल गतौ (भू.५५४) । शलति । शल्+व, धातुस्थ अकार को उकार, व को ब, विभक्तिकार्य, शुल्बम् । ताम्र (ताँबा) । शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ (मेदिनी.बान्त.२७) ।

शुच (शोके) बन्, चकार को लकार, गुणाभाव, शुल्बम् । (वै.सि.कौ.बाल.उ.सू.५३५) ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी व प्रत्यय तथा निपातन से अपेक्षित कार्य करके निष्पन्न कर लेना चाहिए ।

यथा–नितम्बः श्रोणि । शम्बः वज्र । डिम्बः व्यसन । हिडिम्बः राक्षस । स्तम्बः गोट । साम्बः जाम्बवतेय । कदम्बः पक्वान्नविशेष । करम्बः दध्योदन । निकुरुम्बम् समूह । कुटुम्बम् दारादि ।

## १९०. शविकमिभ्यां दः ।३–६३।

आभ्यां दप्रत्ययो भवति । 'शव गतौ' शवतीति शब्दः ध्वनिः । 'कमु कान्तौ' कमतीति (कामयते) कन्दः सूरणः ।

शव् एवं कम् धातु से द प्रत्यय होता है ।

**शब्दः** शव गतौ (भू.२३८) । शवति । शव्+द, वकार को बकार, विभक्तिकार्य, शब्दः । ध्वनि । निनाद । इन्द्रियविषय । अक्षरसमूह ।

शप् (आक्रोशे)+दन्, जशत्व, शब्दः (वै.सि.कौ.उ.सू.५३७) । शप्यते आहूयते अनेन स शब्दः (दया.उ.को.४/९७) । शास्त्रे शब्दस्तु वाचकः (अ.को.१/६/२) ।

**कन्दः** कमु कान्तौ (भू.४०५) । कामयते । कम्+द, म् को अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, कन्दः । सूरण । ओल, सूरन । बण्डा । कन्दोऽस्त्री सूरणे शस्यमूले जलधरे पुमान् (मेदिनी.दान्त.३) ।

## १९१. कुन्दादयः ।३–६४।

कुन्दवृन्दमन्दाब्दाः । एते दप्रत्ययान्ता निपात्यन्ते ।............तीति[1] ('कुण शब्दे' कुण–तीति) कुन्दः पुष्परसविशेषः । 'वृञ्

---

1. वृत्ति में 'कुन्दः' शब्द की प्रकृतिभूत धातु एवं व्युत्पत्ति का पूर्व सम्पादक ने निर्देश नहीं किया बल्कि तदर्थ सात रिक्त बिन्दुओं का निर्देश किया । कलापोणादि बंग संस्करण में कुन्द की धातु–'कुण शब्दे' का पाठ है । अतः रिक्त स्थान में 'कुण शब्दे' कुण–तीति' ऐसा पाठ रखा जा सकता है । पञ्चपादी में 'कु शब्दे' से निष्पत्ति की गई । ति.अनु. में भी यही धातु निर्दिष्ट है ।

वरणे' वृणोतीति *वृन्दः* समूहः । 'मन ज्ञाने' मन्यते *मन्दः* स्थिरगतिः[1] । 'अव रक्ष पालने' अवतीति *अब्दः* संवत्सरः ।

कुन्द, वृन्द, मन्द, अब्द ये चारों द प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*कुन्दः* कुण शब्दे (तु.५ उपकरणेऽपि) । शब्द करना, दानादि से संरक्षण करना । कुणति । कुण्+द, ण् को न्, गुणाभाव, विभक्तिकार्य, कुन्दः । पुष्परस । कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना (मेदिनी.दान्त.३) ।

कु शब्दे, दन्, नुम्, कुन्दः (वै.सि.कौ.उ.सू.५३८) ।

*वृन्दः* वृञ् वरणे (सु.८) । वरण करना, पसन्द करना । वृणोति । वृ+द, निपातन से न् आगम, गुण का अभाव, विभक्तिकार्य, वृन्दः । समूह । वृन्दं निकुरम्बं कदम्बकम् (अ.को.२/५/४०) ।

*मन्दः* मन ज्ञाने (दि.११३) । मन्यते । मन्+द, विभक्तिकार्य, मन्दः । स्थिरगति वाला । मूर्ख ।

मन्दः खले मन्दरते मूर्खे स्वैरेऽल्परागिणोः । अभाग्येऽपि च मातङ्गे गजजातिप्रभेदयोः ॥ (वि.प्र.को.दान्त.१०) ।

*अब्दः* अव पालने (भू.१०२) । रक्षा करना । अवति । अव+द, निपातन से वकार को बकार, विभक्तिकार्य, अब्दः । संवत्सर । अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमान् (मेदिनी.दान्त.२) ।

---

1. अविद्वान् (ति.अनु.) स्वल्पम् (बं.सं.) ।

१९२. पीम्यो रुः[1] ।३-६५।

अनयोः रुप्रत्ययो भवति । 'पीङ् पाने' पीयते पेरुः भास्करः । 'मीङ् हिंसायाम्' मीयते मेरुः सुरशैलः । सुपूर्वः । सुमेरुः स एव ।

पी एवं मी धातु से रु प्रत्यय होता है ।

**पेरुः** पीङ् पाने (दि.९०) । पीना । पीयते (रसान्) । पी+रु, धातुघटक ईकार को गुण से एकार, विभक्तिकार्य, पेरुः । भास्कर । सूर्य ।

मिपीभ्यां रुः पीयते रसानिति पेरुः (वै.सि.कौ.तत्त्व.उ.सू.५४१) ।

*मेरुः* मीङ् हिंसायाम् (दि.८५) । हिंसा करना, नष्ट करना । मीयते । मी+रु, धातुघटक ईकार को एकार गुण, विभक्तिकार्य, मेरुः । सुवर्णगिरि । राजा । सुमेरु । मेरुः सुमेरुः हेमाद्रिः (अ.को.१-१-५२) ।

१९३. जत्र्वादयः ।३-६६।

जत्रुश्मश्रुशिग्रुशत्रवः । एते रुप्रत्ययान्ता निपात्यन्ते । 'जनी प्रादुर्भावे' जायते जत्रु ग्रीवाया अस्थि, ग्रीवावयवो वा । 'शो तनूकरणे' श्यति *श्मश्रु* मुखशोभा । 'शीङ्[2] (शिञ्) निशामने' शिनोतीति *शिग्रुः* शोभाञ्जनः । 'शदॢ शातने' शीयत इति *शत्रुः* वैरी । एवमन्येऽपि ।

---

1. पीमीभ्यां रुः (बं.सं.३-१९५) ।
2. शीङ् निशामने म.सं. । निशामन या निशान अर्थ में 'शिञ्' धातु पठित है । म.सं. शीङ् पाठ असाधु है । पा.धातु. में 'शिञ् निशाने' (सु.१३२९) पठित है । कात.धातु में भी शिञ् निशाने (सु.३) पठित है । अतः 'शिञ्' पाठ उचित है ।

जत्रु, श्मश्रु, शिग्रु, शत्रु ये सभी रु प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***जत्रु*** जनी प्रादुर्भावे (दि.९४) । जायते । जन्+रु, निपातन से नकार को तकार, विभक्तिकार्य, जत्रु (नपुं.) । ग्रीवा की हड्डी या ग्रीवा (गर्दन) का अङ्ग स्कन्धसन्धिः (कन्धों का जोड़) । स्कन्धो भुजशिरोंऽसोऽस्त्री सन्धी तस्यैव जत्रुणी (अ.को.२/६/७८) ।

***श्मश्रु*** शो तनूकरणे (दि.१९) । तनूकरण=छीलना, पतला करना । श्यति । सन्ध्यक्षर ओकार को आकार । शा+रु, निपातन से आकार का लोप तथा मश् आगम, विभक्तिकार्य, श्मश्रु (नपुं.) मुखशोभा । मुखरोम । तद्वृद्धौ श्मश्रु पुमुंखे (अ.को.२/६/९९) ।

श्मन् (पूर्वक) श्रिञ्+डु, नकार लोप, डित्व के कारण इकार लोप, श्मश्रु । श्मनि श्रयतेर्डुन् (वै.सि.कौ.उ.सू.७०६) । श्मनि शीङो डित् (सरस्वती.२/१/९८) ।

***शिग्रुः*** शिञ् निशाने (सु.३) । निशान=तीक्ष्ण करना, पैना करना । शिनोति । शि+रु, निपातन से ग् आगम, गुणाभाव, विभक्तिकार्य, शिग्रुः । शोभाञ्जन । तरु । सहिजन । शाक । भाजी ।

शिग्रुः शोभाञ्जने शाके (वि.प्र.को.रान्त.७२) । शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे (मेदिनी.रान्त.९०) ।

शेतेऽसौ शिग्रुः, शोभाञ्जनस्तरुः 'सहिजना' इति प्रसिद्धः शाकं वा (दया.उ.को.४-१०३ व्याख्यान्तर्गत) ।

***शत्रुः*** शदलृ शातने (भू.५६३) । जीर्ण होना, मुरझाना । शीयते शद्+रु, दकार को तकार, विभक्तिकार्य, शत्रुः । वैरी ।

तु.- रुशातिभ्यां क्रुन्, शाति+क्रुन्, शत्रुः (वै.सि.कौ.उ.सू.५४३) ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी निपातन से सिद्ध कर लेना चाहिए । यथा–रुरुः मृगभेद । अश्रु आँसू । कद्रुः वर्णभेद । वितद्रुः नदी (उज्ज्वल.४–१०२) ।

## १९४. योरागूः[1] ।३–६७।

अस्मादागूप्रत्ययो भवति । 'यु मिश्रणे' यौतीति यवागूः[2] अश्वपद्यं वरणञ्च ।

॥ इति दौर्गसिंह्या(सिम्ह्या)मुणादिवृत्तौ तृतीयः पादः ॥

यु धातु से आगू प्रत्यय होता है ।

*यवागूः* यु मिश्रणे (अ.६) । जुड़ना, मिलना । यौति । यु+आगू, धातुघटक उकार को ओकार गुण 'ओ अव्' (कात.१/२/१४) से ओकार के स्थान में अव् आदेश, विभक्तिकार्य, यवागूः । दूध से पका हुआ यवचूर्ण । चावलों का माँड़ (लप्सी, हलुआ) ।

यवागूरुष्णिका श्राणा विलेपी तरला च सा (अ.को.२/९/४९) । यवागूः षड्गुणजलपक्वधनद्रवद्रव्यविशेषः यज्ञद्रव्यविशेषश्च (मु.को.लिङ्गानु.टि.–पृ.९३) ।

(दुर्गसिंह कृत उणादिवृत्ति के तृतीय पाद की हिन्दी टीका समाप्त)

---

1. कलापोणादि के बं.सं. में प्रथम पाद से तृतीय पाद तक १९९ सूत्र हैं । मं.सं. में १९४ सूत्र हैं । अर्थात् इसमें ५ सूत्र कम हैं ।
2. यवागूः तण्डुलकणान्नम् (बं.सं.४–१९९) ।

## ॥अथ चतुर्थः पादः॥

### १९५. जनिमनिदसिभ्यो युः ।४-१।

एभ्यो युप्रत्ययो भवति । उणादित्वाद् योरनादेशो न भवति । 'जनी प्रादुर्भावे' जायते *जन्युः* प्राणी । 'मन ज्ञाने' मन्यते *मन्युः* कोपः । 'तसु दसु उपक्षये' दस्यति अन्यमुपक्षिणोतीति *दस्युः* चौरः

जन्, मन्, दस् इन धातुओं से यु प्रत्यय होता है । 'उणादित्वात्' इस हेतु से प्रत्यय यु के स्थान में 'युवुझामनाकान्ताः' (कात.४/६/५४) इस सूत्र से 'अन' आदेश नहीं होता । जब कि इस सूत्र से यु, वु, झ को क्रमशः अन, अक, अन्त आदेश होते हैं ।

*जन्युः* जनी प्रादुर्भावे (दि.९४) । प्रादुर्भाव=उत्पन्न होना, जन्म लेना । जायते । जन्+यु, उणादित्वात् हेतु से यु को अन का निषेध, 'धातुविभक्तिवर्जमर्थवल्लिङ्गम्' (कात.२/१/१) इस सूत्र से लिङ्गसंज्ञा 'तस्मात् परा विभक्तयः' (कात.२/१/२) सूत्र से सि, 'रेफसोर्विसर्जनीयः' (कात.२/३/६३) सूत्र से स् को विसर्ग, जन्युः । प्राणी । शरीरी । अथ जन्युः स्यात् पुंसि प्राण्यग्निधातृषु (मेदिनी.यान्त.२७) ।

तु.- जन्+युच्, जन्युः (वै.सि.कौ.उ.सू.३/३००) ।

*मन्युः* मन ज्ञाने (दि.११३) । जानना, ज्ञान करना । मन्यते । मन्+यु, यु को अन का निषेध, विभक्तिकार्य, मन्युः । कोप । मन्युः पुमान् क्रुधि । दैन्ये शोके च यज्ञे च (मेदिनी.यान्त.४५) ।

*दस्युः* दसु उपक्षये (दि.५२) । उपक्षय=दबाना, क्षति पहुँचाना । दस्यति अन्यम् उपक्षिणोति (जो दूसरे को दबाता है या क्षति पहुँचाता है) ।

दस्+यु, विभक्तिकार्य, दस्युः । चोर । शत्रु । दस्युश्चौरे रिपौ पुंसि (मेदिनी.यान्त.३०) ।

## १९६. ह्रीकृशिभ्यां कुगानुकौ[1] ।४-२।

आभ्यां 'कुक्' 'आनुक्' इत्येतौ प्रत्ययौ भवतो यथासङ्ख्यम् । ककारो यण्वद्भावार्थस्तेनागुणत्वम् । 'ह्री लज्जायाम्' जिह्रेतीति *ह्रीकुः* सलज्जः । 'कृश तनूकरणे' कृशतीति [2](कृश्यतीति) *कृशानुः* वह्निः ।

ह्री एवं कृश् इन दोनों धातुओं से क्रमशः कुक् तथा आनुक् प्रत्यय होते हैं । प्रत्ययस्थ अन्त्य क् अनुबन्ध के 'के यण्वच्च योक्तवर्जम्' (कात.४/१/७) इस नियम से यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है । कात.व्या. में अनुबन्ध प्रयोगार्ह नहीं होते ।

***ह्रीकुः*** ह्री लज्जायाम् (अ.६९) । लज्जित होना, झुकना । जिह्रेति । ह्री+कुक्, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, विभक्तिकार्य, ह्रीकुः । लज्जायुक्त । धृष्णु ।

रेफस्य च लत्वादेशः ह्लीकुर्जतुत्रपुणी लाक्षादिश्च (उज्ज्वल.३-८५) ।

तु.- ह्रियः कुग्रश्च लो वा (वै.सि.कौ.३/३६५) ।

***कृशानुः*** कृश तनूकरणे (दि.६५) । तनूकरण=कृश होना, सूक्ष्म होना । कृश्यति । कृश्+आनुक्, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, विभक्तिकार्य, कृशानुः । वह्नि । अग्नि ।

---

1. ष्णुकानुकौ (बं.सं.४-२०१) ।
2. कृश् धातु वर्तमान उपलब्ध कातन्त्र धातुपाठ में दिवादिगण में (दि.६५) पठित है । अतः वृत्ति में 'कृशति' पाठ असमीचीन है । दैवादिक पाठ के अनुसार 'कृश्यति' होना चाहिए ।

## १९७. मन्यतेः किरत उच्च ।४–३।

अस्मात् किः प्रत्ययो भवति, अत उत्वम् । 'मन ज्ञाने' मन्यते *मुनिः* यतिः ।

मन् धातु से कि प्रत्यय होता है तथा मन्–घटक अकार को उकार होता है । 'कि' में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । इससे धातु को गुण का निषेध होता है ।

*मुनिः* मन ज्ञाने (दि.११३) । जानना, ज्ञान करना । मन्यते । मन्+कि, मन् में मकार घटक अकार को प्रकृत सूत्र से उकार, यण्वद्भाव होने से गुण का निषेध, विभक्तिकार्य, मुनिः । यति । मुनिर्यमीङ्गुदीबुद्धपियालागस्तिकिंशुके (वि.प्र.को.नान्त.२१) ।

धर्मादिमननात् मुनिः वसिष्ठः ज्ञानी (बं.सं.सू.४–२०१) ।

## १९८. अहिकम्प्योर्नलोपश्च ।४–४।

आभ्यां किः प्रत्ययो भवति, नलोपश्च । 'अहि प्लिहि गतौ' अंहते वेगेन गच्छतीति *अहिः* सर्पः । 'कपि चलने' कम्पते *कपिः* वानरः ।

अंह्, कम्पि इन धातुओं से कि प्रत्यय होता है तथा अंह्–घटक नकार का लोप होता है । 'अहि' के इदित् होने से न् आगम[1] तथा अनुस्वार होकर 'अंह्' रूप होता है ।

*अहिः* अहि गतौ (भू.४४८) । इदनुबन्ध से न् आगम । अंहति । अंह्+कि, नकार लोप, विभक्तिकार्य, अहिः । सर्प । साँप । अहिः वृत्रासुरे सर्पे (वि.प्र.को.हान्त.८) ।

---

1. इदनुबन्धत्वान्नागमः (ति.अनु.४–१९८) ।

आङ् हन्+इण्, ह्रस्व, अहिः (वै.सि.कौ.उ.सू.४/५७७) ।

***कपिः*** कपि चलने (भू.३८१) । चलना, कँपना । इदनुबन्ध से न् आगम । कम्पते । कम्प्+कि, नकारलोप, विभक्तिकार्य, कपिः । बन्दर । वर्णभेद ।

कपिर्ना सिह्ल्के शाखामृगे च मधुसूदने (मेदिनी.पान्त.२) ।

## १९९. शृवसिवपिराजिवृहनिनभिभ्य इञ् ।४-५।

एभ्य इञ्प्रत्ययो भवति । ञकार इज्वद्भावार्थः । 'शॄ सॄ हिंसायाम्' शृणोतीति (शृणाति) *शारिः* गजप्रावरणम् । 'वस निवासे' वसतीति *वासिः* काष्ठकुद्दालः[1] । 'डु वपु' उप्यते *वापी* जलाधारः । 'राजृ दीप्तौ' राजत इति *राजिः* श्रेणिः । 'वृञ् वरणे' वृणोतीति वारि जलम् । 'हन हिंसागत्योः' हन्तीति *घातिः* प्रहरणम् । 'णभ तुभ हिंसायाम्' नभ्यतीति *नाभिः* शरीरमध्यम् ।

शृ, वस्, वप्, राज्, वृञ्, हन्, नभ् इन धातुओं से इञ् प्रत्यय होता है । इञ् में ञ् अनुबन्ध से 'सिद्धिरिज्वद् ञ्णानुबन्धे' (कात.४/१/१) इस सूत्र से इज्वद्भाव होता है । इज्वद्भाव के कारण उपधावृद्धि, दीर्घादि कार्य होते हैं ।

***शारिः*** शॄ हिंसायाम् (क्री.१५) । हिंसा करना, नष्ट करना । शृणाति । शॄ+इञ्, ञ् अनुबन्ध के इज्वद्भावार्थ होने से ॠ को आर् वृद्धि, विभक्तिकार्य, शारिः । हाथी की झूल (हाथी की पीठ पर जो वस्त्र झूलता रहता है, जिस पर महावत भी बैठता है) । पक्षिविशेष । शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारान्तरेऽपि च (मेदिनी.रान्त.८८–८९) ।

---

1. तक्षकारभाण्डम् (दश.वृ.१/५३), छेदनवस्तुनि (वै.सि.कौ.उ.५६४) ।

कपिलिकादित्वाल्लत्वम्, शालिः (वै.सि.कौ.–तत्त्व.उ.सू.५६७) । शालिस्तु कलमादौ च गन्धमार्जारके पुमान् (मेदिनी.लान्त.५०) ।

***वासिः*** वस निवासे (भू.६१४) । निवास करना, रहना । वसति । वस्+इञ्, ञ् अनुबन्ध के इज्वद्भावार्थ होने से उपधादीर्घ, विभक्तिकार्य, वासिः । लकड़ी की कुल्हाड़ी । कुद्दाल । कुठार भेद । वसूली । औजार ।

***वापी*** डु वपु बीजसन्ताने (भू.६०९) । पैदा होना, उगना । उप्यते । वप्+इञ्, इज्वद्भाव से वृद्धि, स्त्री. में 'नदाद्यन्चि.' इत्यादि सूत्र से ई, लिङ्गसंज्ञा सि, सिलोप, वापी । बावड़ी । बड़ा कुआँ । जलाशय । जीवजन्तुओं का जलाधार (ति.अनु.) ।

उप्यन्ते निधीयन्ते जलान्यस्यामिति वापी (श्वेत.वृ.४/१३४) ।

***राजिः*** राजृ दीप्तौ (भू.५३९) । चमकना, प्रकाशित होना । राजते । राज्+इञ्, राजिः । श्रेणि, पङ्क्ति । रेखा । राजिः स्त्री पंङ्क्तिरेखयोः (वि.प्र.को.जान्त.९) ।

***वारि*** वृञ् वरणे (सु.८) । पसन्द करना, स्वीकार करना । वृणोति । वृ+इञ्, इज्वद्भाव के कारण 'अस्योपधाया.' (कात.३/६/५) इत्यादि सूत्र से आर् वृद्धि, नपुंसक में सि, सि का लोप, वारि । जल । वारिः स्मृत्यां सरस्वत्यां वारि ह्लीबेरनीरयोः । वारी घटीभबन्धन्योः (वि.प्र.को.रान्त.८१) । वारिः पथिकसंहतौ (वै.सि.कौ.उ.सू.४/५६४) ।

***घातिः*** हन हिंसागत्योः (अ.४) । मारना, जाना । हन्ति । हन्+इञ्, हकार को घकारादेश, तथा त् अन्तादेश, इज्वद्भाव से वृद्धि । विभक्तिकार्य, घातिः । प्रहरण शस्त्र । निघातिर्लोहघातिनी (वै.सि.कौ.उ.सू.४/५६४) ।

*नाभिः* णभ हिंसायाम् (नभ.दि.७५) । हिंसा करना । नभ्यति । 'णो नः' से ण् को न् । नभ्+इञ्, इञ्वद्भाव से उपधावृद्धि, विभक्तिकार्य, नाभिः । शरीर के मध्य में स्थित अङ्गविशेष । क्षत्रिय । उदरकूपिका ।

नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे (मेदिनी.भान्त.५–६) ।

## २००. अजिजन्यतिरशिपणिभ्यः ।४–६।

एभ्य इञ्प्रत्ययो भवति । पृथग्योगः स्पष्टार्थः । अत एव निर्देशादजेर्वी न स्यात् । 'अज क्षेपणे' अज्यते लोकोऽस्मिन्निति *आजिः*[1] । 'जन जनने' जजन्तीति *जनिः* माता । 'अत सातत्यगमने' अततीति *आतिः* गमनम् । 'रश' इति सौत्रोऽयं धातुः । रशतीति *राशिः* । 'पण व्यवहारे स्तुतौ च' पणायते व्यवहरत्यनेन *पाणिः* करः ।

अज्, जन्, अत्, रश्, पण् इन धातुओं से 'इञ्' प्रत्यय होता है । 'इञ्' में 'ञ्' अनुबन्ध के इञ्वद्भावार्थ होने से उपधा–वृद्धि होती है । पूर्ववर्ती (४–५) सूत्र से इस सूत्र का पृथक् पाठ स्पष्टता के लिए विहित है । पृथक् योग होने से 'अजेर्वी' (कात.३/४/९१) इस सूत्र से अज् के स्थान में 'वी' आदेश नहीं होता ।

*आजिः* अज क्षेपणे (भू.६४) । जाना, फेंकना । अज्यते लोकोऽस्मिन् (जिसमें व्यक्ति फेंके जाते हैं) । अज्+इञ्, इञ्वद्भाव से वृद्धि, अज् के स्थान में वी का निषेध, विभक्तिकार्य, आजिः । युद्ध । आजिः समावनौ युद्धे (वि.प्र.को.जान्त.९) ।

---

1. आजिः युद्धभूमिः (ति.अनु.४–२००) । ।

*जनिः* जन जनने (अं.८०) । उत्पन्न होना । जजन्ति । जन्+इञ्, ञ् अनुबन्ध से इञ्वद्भाव के कारण प्राप्त वृद्धि का 'जनिवध्योश्च' (कात.३/४/६७) सूत्र से निषेध, विभक्तिकार्य, जनिः । माता । उत्पत्ति । जनी सीमन्तिनीवध्वोरुत्पत्तावौषधीभिदि (मेदिनी.नान्त.६) ।

जायतेऽस्यां गर्भ इति जनिः अभिनवपाणिग्रहणा (श्वेत.वृ.४-१३९) ।

*आतिः* अत सातत्यगमने (भू.३) । निरन्तर चलना । अतति । अत्+इञ्, उपधा-वृद्धि, विभक्तिकार्य, आतिः । गमन । स्वर्ग । तित्तिर-भेद । पक्षी ।

*राशिः* रश (सौत्र धातु) रश्+इञ्, वृद्धि, विभक्तिकार्य राशिः । समूह । मेषादि राशि । राशिर्मेषादिपुञ्जयोः (मेदिनी.शान्त.१२) ।

तु.- अशेरुट्, राशिः (वै.सि.कौ.उ.सू.५७२) ।

*पाणिः* पण व्यवहारे स्तुतौ च (भू.४०१) । उद्योग करना, व्यापार करना । पणायते । पण्+इञ्, उपधावृद्धि, विभक्तिकार्य, पाणिः । हाथ ।

## २०१. वे [ञो डिः] ।४-७।

अस्मात् डिप्रत्ययो भवति । डोऽन्त्यस्वरादिलोपार्थः । 'वेञ् तन्तुसन्ताने' वयतीति *विः* पक्षी ।

वेञ् धातु से डि प्रत्यय होता है । 'डि' में ड् अनुबन्ध 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) सूत्र से धातु में अन्त्य स्वरादि के लोपार्थ प्रयुक्त है ।

*विः* वेञ् तन्तुसन्ताने (भू.६११) । बुनना, सिलना । वयति । वे+डि, ड् अनुबन्ध के कारण 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) इस सूत्र से

धातुस्वर एकार का लोप, विभक्तिकार्य, विः । पक्षी । वि श्रेष्ठेऽतीते नानार्थे पक्षिवाचि त्वनव्ययम् (अने.सं.परि.पृ.१४७- श्लोक-२०) ।

## २०२. नीविः[1] ।४-८।

अयं डिप्रत्ययान्तो निपात्यते । निपूर्वः । 'वेञ् तन्तुसन्ताने' वयतीति *नीविः* मूलबन्धनम्[2] [मूलधनम्] ।

'नीवि' यह डिप्रत्ययान्त शब्द निपातन से सिद्ध होता है ।

*नीविः* नि(पूर्वक) वै+डि, ड् अनुबन्ध से 'वे' घटक एकार का लोप, नि-घटक इकार को निपातन से दीर्घ, विभक्तिकार्य, नीविः । मूलधन । दुकूलबन्धन । नीवी परिपणे स्त्रीणां कटीवसनबन्धने (मेदिनी.वान्त.१५) । नीवी परिपणं मूलधनम् (अ.को.२/९/८०) ।

तु.- नौ व्यो यलोपः पूर्वस्य च दीर्घः, (वै.सि.कौ.उ.४/५७५) ।

## २०३. सख्यादयः ।४-९।

सखि-अश्रि-प्रहि- इत्यादयो डिप्रत्ययान्ता निपात्यन्ते । 'ख्या प्रकथने' समा[नं] ख्यातीति *सखि*[3] मित्रम् । 'श्रा पाके' नञ्पूर्वः । न श्रातीति *अश्रिः* अग्रभागः[4] । 'ओ हाक् त्यागे' प्रपूर्वः । प्रजहातीति *प्रहिः* कूपः त्यागकर्ता वा । इत्यादयोऽप्यनुसर्तव्याः ।

सखि, अश्रि, प्रहि इत्यादि डि प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

---

1. नौ च (बं.सं.४/२०७) ।
2. मूलधनम् (ति.अनु.) ।
3. समान इत्यस्य 'स' आदेशः (ति.अनु.) ।
4. तृणांशः (ति.अनु.) ।

***सखि*** ख्या प्रकथने (अ.२४) । प्रकथन=प्रसिद्ध करना, प्रख्यात करना । समानं ख्याति (जो समान रूप से प्रसिद्ध होता है) । समान+ख्या+डि, ड् अनुबन्ध से या का लोप, समान के स्थान पर 'स' आदेश, विभक्तिकार्य, सखि । मित्र । सखा मित्रे सहाये ना वयस्यायां सखी मता (मेदिनी.खान्त.७) ।

तु.– समानं ख्यायते जनैरिति सखा, समाने ख्यः स चोदात्तः (वै.सि.कौ.उ.सू.४/५७६) ।

***अश्रिः*** श्रा पाके (अ.२९) । पकाना, उबालना । न श्राति । न+श्रा+डि, ड् अनुबन्ध से धातुघटक आकार का लोप, 'नस्य तत्पुरुषे लोप्यः' (कात.२/५/२२) सूत्र से नञ्–घटक न् का लोप, विभक्तिकार्य, अश्रिः । अग्रभाग । कोटि ।

आङ्(पूर्वक) श्रिञ्+इण्, ह्रस्व (वै.सि.कौ.उ.सू.४/५७७) ।

***प्रहिः*** ओ हाक् त्यागे (अ.७१) । छोड़ना । प्रजहाति । प्र+हा+डि, ड् अनुबन्ध से धातुघटक आकार का लोप, विभक्तिकार्य, प्रहिः । कूप या त्यागकर्ता ।

तु.– प्रे हरतेः कूपे (वै.सि.कौ.उ.सू.४/५७४) ।

## २०४. धृञ्[1] (दृञ्)वसिभ्यां क्तिः ।४–१०।

आभ्यां क्तिप्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । 'दृञ् आदरे' द्रियते *दृतिः* चर्मप्रसेवकः । 'वस आच्छादने' वस्यतेऽनया *वस्तिः* पूर्वीशिरा ।

---

1. वृत्ति में 'दृञ् आदरे' तथा उससे निष्पन्न 'दृति' में दकार होने से सूत्र में 'धृञ्' के स्थान पर 'दृञ्' पाठ होना चाहिए । पा.उ. दृणातेर्ह्रस्वश्च (वै.सि.कौ.उ.४/६२३) ।

दृञ् तथा वस् धातु से क्ति प्रत्यय होता है । 'क्ति' में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । इससे धातु को गुण का निषेध होता है ।

*दृतिः* दृङ् आदरे (तु.११२) । सत्कार करना । द्रियते । दृ+क्ति, यण्वद्भाव से ऋ को गुणनिषेध, विभक्तिकार्य, दृतिः । चमड़े को सिलने वाला । चमार । चर्ममय पात्र । दृतिश्चर्मपुटे झषे (वि.प्र.को.तान्त.४८) । दृतिश्चर्मपुटे मत्स्ये ना (मेदिनी.तान्त.२६) ।

तु.- दृ+ति, ह्रस्व (वै.सि.कौ.उ.सू.४/६२३) ।

*वस्तिः* वस निवासे (भू.६१४) । वस्यते अनया । वस्+क्ति, विभक्तिकार्य, वस्तिः । पूर्वीशिरा ; नाभि का निचला प्रदेश । वस्तिर्द्वयोर्निरूहे नाभ्यधो भूम्नि दशासु च (मेदिनी. तान्त.५५) ।

## २०५. वहिवस्यमिभ्योऽतिः ।४–११।

एभ्योऽतिप्रत्ययो भवति । 'वह प्रापणे' वहतीति *वहतिः* नौः[1] (गौः) । 'वस निवासे' वसति लोकोऽस्यामिति *वसतिः* गृहम् । 'अम गतौ' अमतीति *अमतिः* कालः[2] ।

वह्, वस्, अम् इन तीनों धातुओं से अति प्रत्यय होता है ।

*वहतिः* वह प्रापणे (भू.६१०) । वहति । वह्+अति; विभक्तिकार्य, वहतिः । बैल । सचिव, परामर्शदाता । वायु, मित्र । वहतिर्गवि सचिवे पुंसि (मेदिनी.तान्त.१४९) ।

---

1. 'वहतिः' का नौका अर्थ उपलब्ध नहीं होता । 'गौ' अर्थ उपलब्ध होता है । अतः 'नौः' के स्थान पर 'गौः' पाठ ही उचित होगा ।
2. रोगः (बं.सं.४/२०५) ।

***वसतिः*** वस निवासे (भू.६१४) । वसति लोकोऽस्मिन् (जिसमें लोग निवास करते हैं) । वस्+अति, विभक्तिकार्य, वसतिः । गृह । घर । ग्राम । वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने (मेदिनी.तान्त.१५१) ।

***अमतिः*** अम गतौ (भू.१६0) । अमति । अम्+अति, विभक्तिकार्य, अमतिः । काल । चन्द्र । अमतिः कालचन्द्रयोः (वि.प्र.को.तान्त.१५४) ।

---

हन्तेरंहश्च[1] । ब.सं.४–२११।

हन्तेरतिःपरो भवति । अंहादेशश्च । *अंहतिरपवर्जनम्*, रोगश्च ।

हन् धातु से अति प्रत्यय तथा हन् को अंह् आदेश होता है ।

***अंहतिः*** हन हिंसागत्योः (अ.४) । मारना, जाना । हन्ति । हन्+अति, हन् के स्थान में अंह् आदेश, विभक्तिकार्य, अंहतिः । अपवर्जन । रोग । दान । अंहतिस्त्यागे रोगेऽप्युभे स्त्रियौ (मेदिनी.तान्त.८७) ।

तु.– हन्तेरंह् च, अंहतिः (दया.उ.को.४/६0) ।

---

1. यह सूत्र मद्रास संस्करण में संगृहीत नहीं है । बङ्ग संस्करण के आधार पर यहाँ दिया गया है । ति.अनु. में भी असंगृहीत है ।

२०६. क्षिपिध्रुविलिखिलङ्घि[1]दमिभ्यो ऋक्[2] (वुक्) ।४–१२।

एभ्यो ऋक् (वुक्) प्रत्ययो भवति । 'क्षिप प्रेरणे' क्षिपतीति *क्षिपकः* योद्धा । 'ध्रुव गतिस्थैर्ययोः' ध्रुवति निश्चलीभवत्यनेन *ध्रुवकः* शङ्कुः । 'लिख लिखने' लिखतीति *लिखकः* चित्रकरः । इदनुबन्धत्वान्नागमः । 'लघिर्गत्यर्थः' लङ्घत इति *लङ्घकः* अशमी कामीत्यर्थः । तम (धम) इति सौत्रः । दमतीति *दमकः* (धमकः) कर्मकारी ।

क्षिप्, ध्रुव्, लिख्, लङ्घ्, दम् (धम्) इन धातुओं से वुक् प्रत्यय होता है । 'वुक्' में वु के स्थान में 'युवुझामनाकान्ताः' (कात.४/६/५४) सूत्र से 'अक' आदेश होता है । म.सं. में 'ऋक्' पाठ है । ऋ के स्थान पर अक–आदेशार्थ युऋझामनाकान्ताः (४–१४) सूत्र पाठ भी प्राप्त है । कात.सू.पा. में यु के बाद 'वु' का पाठ मिलता है,. 'ऋ' नहीं मिलता । पा.व्या. में भी 'युवोरनाकौ' (अ.सू.७/१/१) से वु के स्थान में अक होता है । अतः 'ऋक्' के स्थान में 'वुक्' पाठ ही शुद्ध एवं समुचित होगा । क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है ।

***क्षिपकः*** क्षिप प्रेरणे (तु.५) । प्रेरित करना । क्षिपति । क्षिप्+वुक्, वु के स्थान में 'युवुझामनाकान्ताः' (कात.४/६/५४) सूत्र से अक आदेश, क् अनुबन्ध से यण्वद्भाव के कारण गुण का निषेध, विभक्तिकार्य, क्षिपकः । योद्धा । आयुध ।

---

1. लिङ्घ बं.सं. । लिङ्घकः कपित्थवृक्षः ।
2. बं.सं., ति. अनु. तथा अन्य उणादिग्रन्थों में 'वुक्' पाठ मिलता है । कात.व्या. में 'वु' के स्थान पर अक आदेश का विधान होता है । ऋ के स्थान पर अक आदेश की व्यवस्था होती तो 'ऋक्' पाठ भी हो सकता था । अतः ऋक् के स्थान पर वुक् पाठ होना चाहिए । म.सं. में 'युऋझामनाकान्ताः (उ.सू.४–१४) यह पाठ असङ्गत है । शुद्ध पाठ–युवुझामनाकान्ताः' (कात.४/६/२४) होता है ।

*ध्रुवकः* ध्रुव गतिस्थैर्ययोः (तु.१०७) । जाना, ठहरना । ध्रुवति निश्चलीभवति अनेन (जिससे स्थिर होता है) । ध्रुव्+वुक्, वु को अकादेश, क् अनुबन्ध से यण्वद्भाव के कारण गुण का निषेध, विभक्तिकार्य, ध्रुवकः । शङ्कु । कीला, खूंटा । आवपनविशेष ।

*लिखकः* लिख लेखने (तु.८२) । लिखना । लिख्+वुक्, वु को अकादेश, गुणाभाव, लिखकः । चित्रकार ।

*लङ्घकः* लघि गत्यर्थः (भू.३३१) । इदनुबन्ध से न् आगम । लङ्घते । लङ्घ्+वुक्, वु के स्थान में अक आदेश, विभक्तिकार्य, लङ्घकः । अशमी । कामी ।

*धमकः* धम (सौत्र धातु) । धम्+वुक्, वु को अकादेश, विभक्तिकार्य, धमकः । कर्मकार ।

तु.- ध्मो धम च, धमकः (दया.उ.को.२/३६) ।

## २०७. हो द्वे च ।४-१३।

अस्माद् ऋक् (वुक्) प्रत्ययो भवति । अस्य च द्वे रूपे भवतः । 'ओ हाक् त्यागे' जहातीति जहकः कमलः[1] (कालः) ।

हा धातु से वुक् प्रत्यय होता है । धातु को प्रकृत सूत्र से द्वित्व भी होता है ।

*जहकः* ओ हाक् त्यागे (अ.७१) । छोड़ना, त्यागना । जहाति । हा+वुक्, वु को अकादेश, हा को द्वित्व, अभ्यासघटक को ह्रस्व, प्रथम

---

1. जहकः का वृत्ति में 'कमल' अर्थ निर्दिष्ट है । अन्य उणादिग्रन्थों में 'काल' अर्थ निर्दिष्ट है । प्रतीत होता है मुद्रण दोष से कालः का 'कमलः' पाठ हो गया ।

हकार को जकार, 'आलोपोऽसार्वधातुके' (कात.३/४/२७) इस सूत्र से आकार का लोप, विभक्तिकार्य, जहकः । काल । त्यागी । जहकः त्यागी कालो वा (दया.उ.को.२/३५) । जहकः कालः (सरस्वती.२/२/११) ।

## २०८. कृषेर्वृद्धिर्वा ।४-१४।

अस्माद् ऋक् (वुक्) प्रत्ययो भवति वृद्धिर्वा । 'कृष विलेखने' कर्षतीति *कर्षकः कार्षकः* कृषीवलः । 'युऋ[1] (वु) झामनाकान्ताः' इति ऋक् (वुक्) स्थाने अकादेशो भवति ।

कृष् धातु से वुक् प्रत्यय होता है तथा विकल्प से वृद्धि होती है ।

*कृषकः–कार्षकः* कृष विलेखने (भू.२२३) । विलेखन=खींचना, जोतना । कर्षति । कृष्+वुक्, वु को 'युवुझामनाकान्ताः' सूत्र से अक आदेश, गुणाभाव, विभक्तिकार्य, कृषकः । कर्षकः शूद्रः निम्नः (ति.अनु.) ।

कृ में ऋ को आर् वृद्धि, कार्षकः । कृषीवल । किसान ।

## २०९. कृञादिभ्यो ऋः[2] (वुः) ।४-१५।

'डु कृञ् करणे' 'सृ गतौ' 'मृङ् प्राणत्यागे' 'फल निष्पत्तौ' एवमादिभ्य ऋ(वु)प्रत्ययो भवति । करोति भयं *करकं*

---

1. कात.व्या. में ऋ का पाठ नहीं है । 'युवुझामनाकान्ताः' (कात.४/६/५४) ऐसा सूत्र पाठ उपलब्ध होता है ।
2. कृञादिभ्योऽकः (बं.सं.पा.) उक्त सूत्र में 'वुः' पाठ होना चाहिए । द्र०–कृञादिभ्यो 'वुः' (ति.अनु.) । पा.उ.–कृञादिभ्यः संज्ञायां वुन् (श्वेत.वृ.५/३५) ।

घनोपलः । सरत्यनेनं *सरकः* सुरापानपात्रम् । म्रियतेऽनेन *मरकः* जनोपसर्गः । *फलकः* अक्षक्रीडादिः । एवमन्येऽपि ।

कृ, सृ, मृङ्, फल इत्यादि धातुओं से वु प्रत्यय होता है ।

***करकम्*** डु कृञ् करणे (त.७) । करोति भयम् (जो भय पैदा करता है) । कृ+वु, वु को अकादेश, अर् गुण, विभक्तिकार्य, करकम् । घनोपल । ओला । पत्थर । वृष्टिपाषाण ।

करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करे चापि, करका च घनोपले (वि.प्र.को.कान्त.२९) । द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ (मेदिनी.कान्त.५४–५५) ।

***सरकः*** सृ गतौ (भू.२७४) । सरत्यनेन । सृ+वु, वु को अकादेश, अर् गुण, विभक्तिकार्य, सरकः । सुरापान का पात्र । प्याला । सरकोऽस्त्री शीधुपात्रे शीधुपानेक्षुशीधुनोः (मेदिनी.कान्त.१६८) ।

***मरकः*** मृङ् प्राणत्यागे (तु.१११) । मरना । म्रियते अनेन । मृ+वु, वु को अकादेश, अर् गुण, मरकः । जनोपसर्ग । जनक्षय । महामारी । (एक संक्रामक रोग) ।

***फलकः*** फल निष्पत्तौ (भू.१७६) । फलति । फल्+वु, वु को अकादेश, विभक्तिकार्य, फलकः । अक्षक्रीडा आदि । द्यूत–क्रीडा । चर्म (बं.सं.) ।

इसी प्रकार की आकृति वाले अन्य शब्दों को भी इसी प्रक्रिया से निष्पन्न कर लेना चाहिए ।

यथा–अलकम् (शीत) । कोरकः कलिका । कटकः बाहुभूषण । कीचकः वंश–भेद । पेचकः उलूकपक्षी । मेचकः कृष्णवर्ण मयूर । पक्षचिह्न । (श्वेत.वृ.५/३५) ।

स्तबकः पुष्पगुच्छ । कवकम् अभक्ष्य द्रव्यविशेष । (ग्रासमात्र) क्षवकः राजसर्षप । चरकः मुनि । चटकः पक्षी । चणकः मुनि । तमकः व्याधि । अमका शैल । देवका अप्सराः । मेनका अप्सराः । मशकः क्षुद्रजन्तु । क्षारकः बालमुकुल । कोरकम् प्रौढमुकुल । मल्लकः शराव । अलकः केशविन्यास । अलका पुरी । सरस्वती. (२/२/७)

## २१०. शमेः खः ।४–१६।

अस्मात् खप्रत्ययो भवति । 'शमु दमु उपशमने' जलं विना शाम्यति *शङ्खः* कम्बुः ।

शम् धातु से ख प्रत्यय होता है ।

***शङ्खः*** शमु उपशमने (दि.४२) । शान्त होना । जलं विना शाम्यति (जो जल के अभाव में शान्त (नष्ट) होता है) शम्+ख, अनुस्वार, पञ्चम वर्ण, शङ्खः कम्बु । ध्वनि (ति.अनु.) ।

शङ्खः कम्बौ न योषिन्ना भालास्थिननिधिभिन्नखे (मेदिनी.खान्त.५) ।

## २११. मुहेर्मूर् च[1] ।४–१७।

अस्मात् खप्रत्ययो भवति मूरादेशश्च । 'मुह वैचित्ये' मुह्यति कार्येषु *मूर्खः* जडः ।

मुह् धातु से ख प्रत्यय तथा मुह् के स्थान में 'मूर्' आदेश होता है ।

***मूर्खः*** मुह वैचित्ये (दि.३७) । वैचित्य=पागल होना, विक्षिप्त होना । मुह्यति कार्येषु (जो कार्य में मोहित होता है) । मुह्+ख, मुह् को मूर्

1. मुहेर्मुरादेशश्च (बं.सं.सू.४/२१७) ।
मुहेः खो मूर्च (वै.सि.कौ.उ.सू.७००) ।

आदेश, विभक्तिकार्य, मूर्खः । जड । अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः (अ.को.३/१/४८) ।

२१२. शिखा ।४–१८।

अयं शब्दः खप्रत्ययान्तो निपात्यते । 'शीङ् (शिञ्) निशामने' (निशाने) शिनोति जनः *शिखा* चूड़ा ।

'शिखा' यह ख प्रत्ययान्त शब्द निपातन से सिद्ध होता है ।

*शिखा* शिञ् निशामने (शिञ् निशाने सु.२) । निशामन=तीक्ष्ण करना, पैना करना । शिनोति जनः (जो अपना चिह्न करता है) । शि+ख, स्त्री. में आ प्रत्यय, विभक्तिकार्य, शिखा[1] । चूडा ।

२१३. गमेर्गः ।४–१९।

अस्माद् गप्रत्ययो भवति । 'गम्लृ गतौ' गम्यते पुण्यार्थिभिः *गङ्गा* जाह्नवी ।

गम् धातु से ग प्रत्यय होता है ।

*गङ्गा* गम्लृ गतौ (भू.२७९) । गम्यते पुण्यार्थिभिः (जहाँ पुण्यजनों के द्वारा जाया जाता है) । गम्+ग, म् को अनुस्वार तथा पञ्चम वर्ण (ङ) स्त्री. में आ प्रत्यय, विभक्तिकार्य, गङ्गा । जाह्नवी ।

२१४. जनेर्घः ।४–२०।

अस्माद् घप्रत्ययो भवति । 'जनीङ् प्रादुर्भावे' जायते अनया वेगो *जङ्घा* प्राण्यङ्गविशेषः ।

जन् धातु से घ प्रत्यय होता है ।

---

1. शिखा शाखा बर्हिचूडालाङ्गलिक्यग्रमात्रके । चूडामन्त्रे शिखायां च ज्वालायां प्रपदेऽपि च (मेदिनी.खान्त.६–७) ।

*जङ्घा* जनी प्रादुर्भावे (दि.९४) । उत्पन्न होना । जायते अनया वेगः (जिससे वेग बढ़ता है) । जन्+घ, नकार को अनुस्वार, पञ्चम वर्ण, स्त्री. में आ प्रत्यय, विभक्तिकार्य, जङ्घा । प्राणी का विशेष अङ्ग । जानु और गुल्फ का मध्यभाग ।

## २१५. कचेश्छः ।४–२१।

अस्मात् छप्रत्ययो भवति । 'कच बन्धने' कचते बध्नाति जलम् । जलेन कच्यते वा । *कच्छः* नदीपार्श्वः ।

कच् धातु से छ प्रत्यय होता है ।

*कच्छः* कच बन्धने (भू.३४०) । बाँधना । कचते बध्नाति जलम् (जो जल को बाँधता है या रोकता है) । कच्+छ, विभक्तिकार्य, कच्छः । नदीपार्श्व । नदीतट । किनारा । जल का अवरोधक । सेतु । शाकमूल । कछार ।

कच्छः स्यादनूपे तुन्नकद्रुमे । नौकान्ते परिधानस्य पश्चादञ्चलपल्लबे । (वि.प्र.को.छान्त.२०) ।

## २१६. कृतृकृपिभ्यः कीटः[1] ।४–२२।

एभ्यः कीटप्रत्ययो भवति । 'कॄ विक्षेपे' शिरसि कीर्यते क्षिप्यते *किरीटः* मुकुटः । 'तॄ प्लवनतरणयोः' तरतीति *तिरीटं* वेष्टनम् । 'कृपू सामर्थ्ये' कल्पत इति *कृपीटः* कर्पूरकुटी जलं वा ।

---

1. कलापोणादि के बङ्ग–संस्करण का चतुर्थ पाद इसी सूत्र पर समाप्त हो जाता है जब कि मद्रास–संस्करण में चतुर्थपाद के अन्तर्गत अभी ४८ सूत्र और अवशिष्ट हैं । ये सभी सूत्र बङ्ग–संस्करण में पञ्चम पाद के अन्तर्गत परिगणित हैं ।

कॄ, तॄ, कृप् इन धातुओं से कीट प्रत्यय होता है । क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है ।

*किरीटः* कॄ विक्षेपे (तु.२१) । फेंकना । शिरसि कीर्यते (जो सिर पर धारण किया जाता है) । कॄ+कीट, ॠदन्तस्येरगुणे (कात.३/५/४२) से ॠ को इर्, विभक्तिकार्य, किरीटः । मुकुट । शिरोवेष्टन । किरीटं मुकुटे न स्त्री. इति चन्द्रगोमी (वै.सि.कौ.उ.सू.६२४) ।

*तिरीटम्* तॄ प्लवनतरणयोः (भू.२८३) । तैरना, पार जाना । तरति । तॄ+कीट, कॄ+कीट, ॠदन्तस्येरगुणे (कात.३/५/४२) से ॠ को इर्, विभक्तिकार्य, तिरीटम् । वेष्टन । सुवर्ण । वृक्षविशेष (बं.सं.) ।

*कृपीटः* कृपू सामर्थ्ये (भू.४८८) । शक्तिसम्पन्न होना । कल्पते । कृप्+कीट, कृपीटः । पेट । जल । वन । कृपीटमुदरे नीरे (वि.प्र.को.टान्त.३७) ।

## २१७. शमेर्डः[1] ।४–२३।

अस्माड्डप्रत्ययो भवति । 'शमु दमु उपशमे' शाम्यतीति *शण्डः* महिषः चौरो वा ।

शम् धातु से ड प्रत्यय होता है । (प्रथम पाद में भी 'शमेर्डः' ३६ सूत्र पठित है । वहाँ शमेर्ढः पाठ शुद्ध होगा । द्र०–१/३६) ।

*शण्डः* शमु उपशमे (दि.४२) । शाम्यति । शम्+ड, अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, शण्डः । भैंस या चोर ।

शण्ढः महिषाकारजन्तुविशेषः (बं.सं.) ।

---

1. बंङ्ग–संस्करण में इस सूत्र से आगे के सभी सूत्र पञ्चम पाद के अन्तर्गत पठित हैं । जब कि मद्रास–संस्करण एवं तिब्बती–अनुवाद में ये सभी सूत्र चतुर्थ पाद के अन्तर्गत ही पठित हैं ।

गमेर्धः[1] (बं.सं.५–२२४) ।

गमेर्धः प्रत्ययो भवति । गन्धः ।

गम् धातु से ध प्रत्यय होता है ।

*गन्धः* गम्लृ गतौ (भू.२७९) । गम्+ध, म् को 'मनोरनुस्वारो धुटि' (कात.२/४/४४) सूत्र से अनुस्वार, अनुस्वार को पञ्चम वर्ण नकार, विभक्तिकार्य, गन्धः । गन्ध । बू । सम्बन्ध । गर्व । न्यायशास्त्र के २४ गुणों में से एक गुण ।

---

२१८. सूचेः स्मः ।४–२४।

अस्मात् स्मः प्रत्ययो भवति । 'सूच पैशुन्ये' सूचयतीति *सूक्ष्मं* परमाणुमात्रम् ।

सूच् धातु से स्म प्रत्यय होता है ।

*सूक्ष्मम्* सूच पैशुन्ये (चु.१९१) । अपकार की भावना से कहना । निन्दा करना । सूचना करना । सूचयति । सूचि+स्म, इन् का लोप 'चजोः कगौ धुड्घानुबन्धयोः' (कात.४/६/५४) सूत्र से चकार को ककार, स् को ष्, क्–ष् के संयोग से क्ष्, विभक्तिकार्य सूक्ष्मम् । परमाणुमात्र । सूक्ष्मं स्यात् कण्टकेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके (मेदिनी.मान्त.३६) ।

---

1. यह सूत्र मद्रास–संस्करण में अप्राप्त है । यहाँ बङ्ग–संस्करण के आधार पर दिया गया है । तिब्बती–अनुवाद तथा पा.उ. में भी अनुपलब्ध है ।

## २१९. अदि भुवो डुतः ।४-२५।

अद्युपपदे अस्मात् डुतप्रत्ययो भवति । 'भू सत्तायाम्' अद्पूर्वः । विस्मितं भवत्यत्र *अद्भुतम्* आश्चर्यम् ।

'अद्' के उपपद में रहने पर भू धातु से डुत प्रत्यय होता है । डुत में ड् अनुबन्ध से धातुस्वर का लोप होता है ।

***अद्भुतम्*** भू सत्तायाम् (भू.१) । रहना, होना । भवत्यत्र विस्मितम् (जहाँ विस्मित होता है) अद्पूर्वक भू+डुत, ड् अनुबन्ध के कारण 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) सूत्र से भू-घटक ऊकार का लोप, विभक्तिकार्य, अद्भुतम् । आश्चर्य । अचम्भा ।

## २२०. रुहिह्वश्याभ्य इतः ।४-२६।

एभ्य इतः प्रत्ययो भवति । 'रुह बीजजन्मनि प्रादुर्भावे' रोहतीति *रोहित्*[1] *(रोहितः)* मत्स्यविशेषः । कपिलिकादित्वात् लोहितं रक्तम् । 'हृञ् हरणे' हरति शोभानी[2](मि)ति *हरितः* वर्णविशेषः । 'श्यैङ् गतौ' श्यायते *श्येतः* कुमुदवर्णाभः[3] ।

रुह्, हृ, श्या इन धातुओं से इत प्रत्यय होता है ।

***रोहितः*** रुह बीजजन्मनि प्रादुर्भावे (भू.५६७) । बीज उगना, पैदा होना । रोहति । रुह्+इत, धातुघटक उकार को ओकार गुण, विभक्तिकार्य, रोहितः । विशेष मछली ।

---

1. रुह् धातु से इत-प्रत्ययान्त 'रोहितः' होता है । म.सं. में हलन्त 'रोहित्' शब्द पठित है । जबकि अन्य उदाहरण अजन्त पठित है । अतः रोहित् के स्थान पर 'रोहितः' पाठ होना चाहिए । हलन्त 'रोहित्' शब्द की प्रथम पाद (१-३५) में निष्पत्ति की जा चुकी है ।
2. शोभानीति म.सं. ।
3. शुक्लवर्णः (ति.अनु., वं.सं.) ।

रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुते। (मेदिनी.तान्त.१४६) ।

'कपिरिकादेर्लोकतः सिद्धिः' इस नियम से रकार को लकार, लोहितम् । रक्त ।

लोहितं रक्तगोशीर्षे कुङ्कुमे रक्तचन्दने । पुमान् नदान्तरे भौमे कर्णे च त्रिषु तद्वति । (मेदिनी.तान्त.१४८)

*हरितः* हृञ् हरणे (भू.५९६) । हरति शोभाम् । हृ+इत, ऋ को अर्, विभक्तिकार्य, हरितः । वर्णविशेष ।

हरिद्दिशि स्त्रियां पुंसि हयवर्णविशेषयोः । अस्त्रियां स्यात्तृणे (मेदिनी.यान्त.१७४–७५) ।

*श्येतः* श्यैङ् गतौ (भू.४५९) । श्यायते । 'सन्ध्यक्षरान्ताना-माकारोऽविकरणे' इस नियम से ऐकार को आकार । श्या+इत, आकार को एकार गुण, तथा इकार का लोप, विभक्तिकार्य, श्येतः । शुभ्र । शुक्ल । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः (अ.को.१/५/१२) ।

## २२१. मृगृवाहस्यमिदमिलूपूभ्यस्तः ।४–२७।

एभ्यस्तप्रत्ययो भवति । 'मृङ् प्राणत्यागे' म्रियते *मर्तः* भूलोकः । 'गॄ निगरणे' गिरतीति *गर्तः* बिलम् । 'वा गतिगन्धनयोः' वातीति *वातः* वायुः । 'हसे हसने' *हस्तः* करः । 'अम गतौ'[1] अमतीति *अन्तः* अवसानम् । 'शमु दमु' दम्यते भक्ष्यतेऽनेन *दन्तः* दशनः । 'लूञ् छेदने' लूयते *लोतः* नेत्रवारि । 'पूञ् पवने' अर्थदानेन आत्मस्थं जनं पुनातीति *पोतः* प्रवहणम् ।

1. अम रोगे (चु.१४०) ति.अनु. ।

मृ, गृ, वा, हस्, अम्, दम्, लू, पू इन सभी धातुओं से त प्रत्यय होता है ।

*मर्तः* मृङ् प्राणत्यागे (तु.१११) । मरना, प्राण छोड़ना । म्रियते अस्मिन् (जहाँ लोग मरते हैं) । मृ+त, ऋ को अर्, विभक्तिकार्य, मर्तः । भूलोक । पृथ्वीलोक । लोक (ति.अनु.) । मर्तो मरणधर्मा मनुष्यः (श्वेत.वृ.३–८२) ।

*गर्तः* गृ निगरणे (तु.२२) । खाना, निगलना । गिरति । गृ+त, ॠ को अर्, विभक्तिकार्य, गर्तः । बिल । विवर । गर्तस्त्रिगर्तभेदे स्यादवटे च कुकुन्दरे (मेदिनी.तान्त.१३) ।

*वातः* वा गतिगन्धनयोः (अ.१७) । जाना, गन्ध देना । वाति । वा+त, विभक्तिकार्य, वातः । वायु । वातो वायुर्व्याधिश्च (उज्ज्वल.३/८६) ।

*हस्तः* हसे हसने (भू.२३५) । हसना । हस्+त, हस्तः । हाथ । ज्योतिष् में २७ नक्षत्रों में एक हस्त नामक नक्षत्र । प्रमाणविशेष । हस्तः करे करिकरे सप्रकोष्ठकरेऽपि च (मेदिनी.तान्त.७५) ।

*अन्तः* अम गतौ (भू.१६०) । अमति । अम्+त, म् को अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, अन्तः । अवसान । समाप्ति । नाश । समीप । तत्त्वस्वरूप । मनोहर । अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहरे (वि.प्र.को.तान्त.३१) ।

*दन्तः* दमु उपशमने (दि.४२) । दम्यते भक्ष्यते अनेन (जिससे खाया जाता है) । दम्+त, म् को अनुस्वार, तथा पञ्चम वर्ण दन्तः । दाँत । दन्तोऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियाम् (मेदिनी.तान्त.२३) ।

*लोतः* लूञ् छेदने (क्री.९) । काटना, छेदना । लूयते (कर्म) । लू+त, ऊकार को ओकार गुण, विभक्तिकार्य, लोतः । नेत्रों का जल ।

आँसू । मुख का जल (लार) ति.अनु. । लोतः स्यादश्रुचिह्नयोः (उज्ज्वल.३-८६) । लोतम् अपहृतधनम् (बं.सं.) ।

*पोतः* पूञ् पवने (क्री.८) । पवित्र करना । अर्थदानेन आत्मस्थं जनं पुनाति (जो अर्थ देकर अपने आपको पवित्र करता है) । पू+त, ऊकार को ओकार गुण, विभक्तिकार्य, पोतः । प्रवहण । नौका । जहाज । पोतो बालवहित्रयोः (उज्ज्वल.३-८६) । पोतः शिशौ वहित्रे च गृहस्थाने च वाससि (मेदिनी.तान्त.३८) ।

## २२२. सर्वधातुभ्यो मन्[1] ।४-२८।

सर्वेभ्यो धातुभ्यो मन्प्रत्ययो भवति । 'भस भर्त्सनदीप्त्योः' भसितं तदिति *भस्म* रक्षा । 'वृतु वर्तने' वृत्तं तदिति *वर्त्म* मार्गः । 'उणादयो भूतेऽपि' इति वचनादतीते अत्र मन् ।

सभी धातुओं से मन् प्रत्यय भूतकाल में होता है ।

*भस्म* भस भर्त्सनदीप्त्योः (अ.७५) । दोष लगाना, निन्दा करना, चमकना । भसितं तद् । (जली हुई) । 'उणादयो भूतेऽपि' (कात.४/४/६७) इस सूत्र से भूतकाल में प्रत्यय । भस्+मन्, भस्मन्, नकारलोप, भस्म । रक्षा । राख ।

*वर्त्म* वृतु वर्तने (भू.४८४) । वर्ताव करना, होना । वृत्तं तदिति । वृत्+मन्, ऋ को अर्, विभक्तिकार्य, वर्त्म । मार्ग । रास्ता । वर्त्म नेत्रच्छदे मार्गे । (मेदिनी.मान्त.२६) ।

मनिन्-प्रत्ययान्त अन्य शब्द-कर्म । चर्म । जन्म । शर्म सुख । हेम सुवर्ण । श्लेष्मा कफ । तर्म यूपाग्र । स्थाम बल । छद्म माया । सुत्रामा इन्द्र । ऊष्मा वाष्प । (उज्ज्वल.वृ.४/१४४) ।

---

1. यह सूत्र ति.अनु. तथा बं.सं. में असंगृहीत है ।

## २२३. मायाछायासस्यादयः[1] ४–२९ (माच्छाशसिभ्यो यः) ।

मायादयो यप्रत्ययान्ता निपात्यन्ते (एभ्यः यप्रत्ययो भवति) 'माङ् माने' मातीति *माया* प्रपञ्चः परवञ्चनं वा । 'छो छेदने' छ्यति आतपमिति *छाया* प्रतिबिम्बम् । 'शसु हिंसायाम्' शसति हिनस्ति क्षुधामिति *सस्यं* धान्यम् । निपातनात् शस्य सत्वम् ।

मा, छा, शस् इन धातुओं से य प्रत्यय होता है । मद्रास–संस्करण में माया, छाया आदि शब्दों को निपातन से सिद्ध किया गया है । पञ्चपादी (दया.उ.को.४/११०) एवं अन्य ग्रन्थों में निपातन से सिद्धि न करके य प्रत्यय के विधान से सिद्धि की गई । निपातन से सिद्धि करना असङ्गत है, यतः य प्रत्यय की अनुवृत्ति भी पूर्व सूत्र से नहीं हो सकती ।

***माया*** मा माने (अ.२६) । नापना । माति । मा+य, स्त्री. में आ प्रत्यय, विभक्तिकार्य, माया । प्रपञ्च । परवञ्चन (दूसरे को ठगना) । माया स्यात् शाम्बरीबुद्ध्योर्मायः पीताम्बरेऽसुरे (मेदिनी.यान्त.४६) ।

***छाया*** छो छेदने (दि.२०) । काटना । छ्यति आतपम् (जो धूप को हटाता है) । सन्ध्यक्षर ओकार को आकार । छा+य, स्त्री. में आ प्रत्यय, विभक्तिकार्य, छाया । प्रतिबिम्ब । अनातप । छाया

---

1. मायाछायासस्यादयः (म.सं.) । यह सूत्रपाठ असङ्गत है । बं.सं. एवं ति.अनु. में 'माच्छाशसिभ्यो यः' (बं.सं. ५–२२९)– ऐसा सूत्रपाठ प्राप्त होता है । माया, छाया आदि य प्रत्ययान्त शब्द निपातन से सिद्ध नहीं किए जा सकते । पूर्व सूत्र से य की अनुवृत्ति भी यहाँ नहीं हो सकती, क्योंकि उससे (४–२८) मन् प्रत्यय होता है । अतः इस सूत्र से य प्रत्यय का विधान करना ही उचित होगा । इसे निपातन से सिद्ध न क़रके य प्रत्यय के विधान से सिद्ध करना चाहिए ।

स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्ति सच्छोभापङ्क्तिषु स्मृता (वि.प्र.को.यान्त.५९) ।

***सस्यम्*** शसु हिंसायाम् (भू.२४०) । मारना, नष्ट करना । शसति हिनस्ति । शस्+य, निपातन से शकार को सकार, स्त्री. में आ प्रत्यय, विभक्तिकार्य, सस्यम् । धान्य ।

पाठा.–शस्यम् ।

## २२४. सन्ध्यादयः ।४–३०।

सन्ध्या–बन्ध्या– जाया इत्यादयः शब्दाः यप्रत्ययान्ता निपात्यन्ते । संपूर्वो धाञ् । संदधातीति *सन्ध्या*[1] दिवावसानम् । संपूर्वः 'ध्यै चिन्तायाम् वा । विप्राः सम्यक् ध्यायन्ति अस्यां वा सन्ध्या रात्रिदिनावसानम् । 'बन्ध बन्धने' बध्यते इति *बन्ध्या*[2] निष्फला । 'ज्या वयोहानौ' जिनातीति जाया । 'जनी[3] प्रादुर्भावे' सुखाय जायते आत्मा अत्र *जाया* पत्नी ।

सन्ध्या, बन्ध्या, जाया इत्यादि य– प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

***सन्ध्या*** ध्यै चिन्तायाम् (भू.२६२) । ध्यान करना, चिन्तन करना । विप्राः सम्यग् ध्यायन्ति अस्याम् (जिस समय ब्राह्मण सम्यक् रूप से ध्यान करते हैं) । सम्–पूर्वक प्रयोग । सम् ध्यै+य, सन्ध्यक्षर को आकार, यकारलोप स्त्री. में आ प्रत्यय, अनुस्वार, पञ्चम वर्ण, विभक्तिकार्य, सन्ध्या । दिन तथा रात्रि की समाप्ति–वेला ।

---

1. सन्ध्या रात्रिदिवसयोः सीमा ति.अनु. । कालविशेषः बं.सं. ।
2. बन्ध्या अनपत्या बं.सं. ।
3. जनेर्जादिशः– (ति.अनु.) जा जनेर्विकरणे (कात.३/६/८१) ।

सन्ध्या नदीकालभिदोश्चिन्तामर्यादयोरपि । प्रतिज्ञायाञ्च सन्धाने सन्ध्या तु कुसुमान्तरे । (वि.प्र.को.यान्त.५८–५९)

*बन्ध्या* बन्ध बन्धने (क्री.३२) । बाँधना । बध्यते । बन्ध्+य, स्त्री. में आ प्रत्यय, विभक्तिकार्य, बन्ध्या । निष्फला । अनपत्या । सन्तानरहित । बन्ध्या त्वप्रजातस्त्रियामपि (वि.प्र.को.यान्त.२८) ।

*जाया* ज्या वयोहानौ (क्री.२३) । जीर्ण होना, वृद्ध होना । जिनाति । ज्या+य, निपातन से य का लोप, स्त्री. मे आ प्रत्यय, विभक्तिकार्य, जाया । पत्नी ।

सुखाय जायते आत्मा अत्र (जिसमें आत्मा सुख के लिए जन्म लेती है) । जनेर्यक् (वै.सि.कौ.उ.सू.४/५५०) ।

## २२५. रुचिभुजिभ्यां किष्यः ।४–३१।

आभ्यां किष्यप्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । रुच दीप्तौ' रोचते इति *रुचिष्यः* प्रियः । 'भुज पालने' स्वाम्युच्छिष्टं भुङ्क्ते *भुजिष्यः* दासः ।

रुच् एवं भुज् धातु से किष्य प्रत्यय होता है । किष्य में क् अनुबन्ध से यण्वद्भाव होकर धातु को गुण का निषेध होता है । 'इष्य' अवशिष्ट रहता है ।

*रुचिष्यः* रुच दीप्तौ (भू.४७३) । चमकना । रुचना । रोचते । रुच्+किष्य, क् अनुबन्ध से यण्वद्भाव के कारण 'रुच्' को गुण का निषेध, विभक्तिकार्य, रुचिष्यः । प्रिय । इष्ट । रुचिष्यमिष्टम् (उज्ज्वल.४–१७८) ।

*भुजिष्यः* भुज पालने (रु.१४–अभ्यवहारेऽपि) । संरक्षण करना । खाना । स्वाम्युच्छिष्टं भुङ्क्ते (जो स्वामी का जूठा खाता है) । भुज्+किष्य, क् अनुबन्ध का अप्रयोग, यण्वद्भाव से गुणनिषेध,

विभक्तिकार्य, भुजिष्यः । दास । सेवक । भुजिष्यस्तु स्वतन्त्रे च हस्तसूत्रकदासयोः । स्त्रियां दासीगणिकयोः ॥ (मेदिनी.यान्त.९८) ।

## २२६. मदेः स्यः ।४–३२।

अस्मात् स्यप्रत्ययो भवति । मदी हर्षे' माद्यति हृष्यति नवोदकेन *मत्स्यः* मीनः ।

मदी धातु से स्य प्रत्यय होता है ।

*मत्स्यः* मदी हर्षे (दि.४८) । प्रसन्न होना । माद्यति नवोदकेन (जो नवीन जल के आगमन से प्रसन्न होता है) । मद्+स्य, 'अघोषेष्वशिटां प्रथमः' (कात.३/८/९) से द् को त्, विभक्तिकार्य, मत्स्यः । मछली । मत्स्यो मीनेऽथ पुंभूम्नि देशे (मेदिनी.यान्त.४५) ।

## २२७. मद्यसि(शि)वसि[वासि]भ्यः सरः[1] ।४–३३।

एभ्यः सरप्रत्ययो भवति । 'मदी हर्षे' माद्यतीति *मत्सरः* पैशुन्यम्[2] । 'अश भोजने' अश्नातीति *अक्षरः*[3] वर्णः । 'वस आच्छादने' वसन्ति ऋतवोऽत्र *वत्सरः* वर्षः । संपूर्वः *संवत्सरः* स एव । 'वास उपसेवायाम्' चौरादित्वादिन् । वासयतीति *वासरः* दिवसः ।

मदी, अश्, वस्, वास् इन धातुओं से सर प्रत्यय होता है ।

---

1. सरन् (बं.सं.५/२२६) ।
2. मत्सरः का म.सं. में 'पैशुन्यम्' अर्थ प्रदत्त है । इसका 'पिशुनः' अर्थ होना चाहिए । पैशुन्य भाववाचक है ।
3. अश्नोतेर्वा सरोऽक्षरम् । अक्षरं न क्षरं विद्यात् (बं.सं.५/२२६) । (द्र0–म.भा.आ.–२)

***मत्सरः*** मदी हर्षे (दि.४८) । प्रसन्न होना, हर्षित होना । माद्यति । मद्+सर, द् को त्, विभक्तिकार्य, मत्सरः । ईर्ष्यालु । चुगलखोर । निन्दक । कृपण । क्रुद्ध ।

मत्सरः । असह्यपरसम्पत्तौ मात्सर्ये कृपणे क्रुधि (वि.प्र.को.रान्त.११७–११८) ।

***अक्षरम्*** अश भोजने (क्री.४३) । खाना । अश्नाति । अश्+सर, 'छशोश्च' (कात.३/६/६०) सूत्र से शकार को षकार, 'रषृवर्णेभ्यो.' (कात.२/४/१८) इत्यादि सूत्र से सकार को षकार, 'षढोः कः से' (कात.३/८/४) सूत्र से षकार को ककार, 'कषयोगे क्षः' (कात.रूप.२५६) सूत्र से क्–ष् के संयोग से क्षकार, विभक्तिकार्य, अक्षरम् । वर्ण । अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोः । गगने धर्मतपसोरध्वरे मूलकारणे । (हेम.अने.तृ.का.५–४९) ।

अशेः सरः (वै.सि.कौ.उ.सू.३/३५१) । अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरमिति स्मृतिः (उज्ज्वल.३–७०) ।

***वत्सरः*** वस निवासे (भू.६१४) । वसन्ति ऋतवः अत्र (जहाँ ऋतुएँ वास करती हैं) । वस्+सर, 'सस्य सेऽसार्वधातुके' (कात.३/६/९३) इस सूत्र से सकार को तकार, विभक्तिकार्य, वत्सरः । वर्ष ।

सम् पूर्वक वस्+सर, संवत्सरः ।

***वासरः*** वास उपसेवायाम् (चु.२०२) । सुगन्धित करना, धूपित करना । धातु के चौरादिक होने से 'चुरादेश्च' (कात.३/२/११) सूत्र से इन् । वासि+सर, इन् तथा स् का लोप, विभक्तिकार्य, वासरः । दिन । वासरो दिवसे रागप्रभेदेऽपि च वासरः (वि.प्र.को.रान्त.१६४) । वासरं पुन्नपुंसकम् (उज्ज्वल.३/१३२) ।

देविवठिभ्रमिवासिभ्योऽरः[1] (बं.सं.सू.५/२३४) ।

एभ्योऽरो भवति । 'देवृ देवने' *देवरः* पत्युः कनिष्ठ-भ्राता । 'वठ स्थौल्ये' *वठरो* जडः । शब्दकारो वस्त्रञ्च । 'भ्रमु चलने' *भ्रमरोऽलिः* । 'वास उपसेवायाम्' *वासरो* दिवसः ।

देव्, वठ्, भ्रम्, एवं वास् इन धातुओं से अर प्रत्यय होता है ।

**देवरः** देवृ देवने (भू.४२१) । देवते । देव्+अर्, विभक्तिकार्य, देवरः । पति का छोटा भाई ।

**वठरः** वठ स्थौल्ये (भू.११२) । मोटा होना । वठति । वठ्+अर, विभक्तिकार्य, वठरः । जड । मूर्ख ।

**भ्रमरः** भ्रमु चलने (भू.५५८) । भ्रमति । भ्रम्+अर, भ्रमरः । भौंरा ।

**वासरः** वास उपसेवायाम् (चु.२०२) । वासयति । वासि+अर्, इन् का लोप वासरः । दिन ।

२२८. शृणातेः करः ।४-३४।

अस्मात् करप्रत्ययो भवति । 'शृ हिंसायाम्' शृणाति पित्तमिति *शर्करा* मत्स्यण्डी, गुडविकारः ।

---

1. यह सूत्र मद्रास-संस्करण में उपलब्ध नहीं है । कलापोणादि के बङ्ग-संस्करण एवं तिब्बती-अनुवाद में प्राप्त है । ति.अनु. में उपर्युक्त पाठ से कुछ अतिरिक्त पाठ भी प्राप्त होता है- चुरादित्वादिन् । अतो लोपः । कारितलोपः । शेष पाठ उपर्युक्त ही है । ति.अनु. में वठरः के स्थान पर पठरः ऐसा भ्रष्ट पाठ है । पञ्चपादी में भी वठरः (दया.उ.को.५/३९) ही पठित है ।

शृ धातु से कर प्रत्यय होता है ।

*शर्करा* शृ हिंसायाम् (क्री.१५) । शृणाति पित्तम् (जो पित्त को नष्ट करता है) । शृ+कर, ऋृ को अर्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, शर्करा । मोटी या विना साफ की हुई चीनी ।

शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च । (वि.प्र.को.रान्त.२१६) ।

## २२९. पुषो यण्वत् ।४-३५।

अस्मात् करप्रत्ययो भवति । स च यण्वत् । [पुष पुष्टौ] पुष्यति शोभामिति *पुष्करं* पद्मम् । लत्वम् । *पुष्कलं* भूरि ।

पुष् धातु से कर प्रत्यय होता है । कर को यण्वद्भाव भी होता है । यण्वद्भाव होने से धातु को गुण का निषेध होता है ।

*पुष्करम्* पुष पुष्टौ (दि.२६) । पुष्ट करना । पुष्यति शोभाम् (जो शोभा को बढ़ाता है) । पुष्+कर, विभक्तिकार्य, पुष्करम् । कमल । पुष्कर क्षेत्र[1] (राजस्थान में अजमेर के समीप) ।

'कपिरिकादेर्लोकतः सिद्धिः' इस नियम से र् को ल् पुष्कलम् । भूरि । प्रचुर ।

---

1. पुष्करं खेऽम्बुपद्मयोः ।
तुर्यवक्त्रे खड्गे हस्तिहस्ताग्रकाण्डयोः ।
कुष्ठौषधे द्वीपतीर्थभेदयोश्च, नपुंसकम् ॥ (मेदिनी.रान्त.१८६-१८७) ।

## २३०. स्तृणातेष्टत्[1] (ड्रट्) ।४–३६।

अस्मात् टत्प्रत्ययो भवति । अकारमात्रः । रमृवर्णः । अथवा डट् [ड्रट्] डानुबन्धेऽन्त्यस्वरादेर्लोपः । टकारो नदाद्यर्थः । ऋकारमात्र एव । स्तृञ् आच्छादने' स्तृणाति आच्छादयति लज्जया आत्मानम् इति *स्त्री* महिला ।

स्तृञ् धातु से टत् प्रत्यय होता है । टत् में अकारमात्र शेष रहता है । कात.व्या. मे ऋवर्ण र–वर्ण को प्राप्त होता है (रमृवर्णः कात.१/२/१०) । पाठान्तर में 'ड्रट्' प्रत्यय भी विहित है । 'ड्रट्' में ड् अनुबन्ध से 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' (कात.२/६/४२) इस सूत्र से धातु के अन्त्य स्वर का लोप होता है । ड्रट् या टत् में टकार अनुबन्ध के कारण 'नदाद्यन्चि.' (कात.२/४/५०) इत्यादि सूत्र से स्त्री में ई प्रत्यय होता है ।

***स्त्री*** स्तृञ् आच्छादने (क्री.१०) । ढकना । स्तृणाति आच्छादयति लज्जया आत्मानम् (जो लज्जा से अपने को आच्छादित करती है) । स्तृ+टत् (अकार शेष) ट्–त् अनुबन्ध का अप्रयोग, 'रमृवर्णः' (कात.१/२/१०) सूत्र से स्तृ में ऋ को रकार, ट् अनुबन्ध के कारण 'नदाद्यन्चि' (कात.२/४/५०) इत्यादि सूत्र से स्त्री. में ई प्रत्यय, 'ईकारान्तात् सिः' (कात.२/१/४८) सूत्र से सि प्रत्यय, सि का लोप स्त्री । महिला । स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः (अ.को.२/६/२) ।

अथवा स्तृ+ड्रट्, ड् अनुबन्ध के कारण धातुस्वर ऋ का लोप, ऋ को रकार, विभक्तिकार्य, स्त्री । स्त्यायतेर्ड्रट् (वै.सि.कौ.उ.सू.५/६०५) ।

---

1. स्तृणातेर्ड्रट् (बं.सं., ति.अनु.) ।

## २३१. कठिचकिभ्यामोरः[1] ।४-३७।

आभ्यामोरप्रत्ययो भवति । 'कठ कृच्छ्रजीवने' कठति कृच्छ्रेण [जीवति] कठोरः कर्कशः । 'चक [2]दीप्तौ' (तृप्तौ) चकतीति चकोरः पक्षिविशेषः ।

**कठोरः** कठ कृच्छ्रजीवने (भ.११४) । कष्ट से जीवन बिताना । कृच्छ्रेण जीवति (जो कष्ट पूर्वक दिन बिताता है) । कठ्+ओर, कठोरः । कर्कश ।

**चकोरः** चक तृप्तौ (भू.५०७) । तृप्त होना । चकति । चक्+ओर, चकोरः । विशेष पक्षी । चकोरः पक्षिविशेषः पर्वतश्च (श्वेत.वृ.१-६१) ।

## २३२. घुणेर्डोरः[3] ।४-३८।

अस्मात् डोरप्रत्ययो भवति । 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' 'घुण घूर्ण भ्रमणे' घोणते घोरं रौद्रम् ।

घुण् धातु से डोर प्रत्यय होता है । 'डोर' में ड् अनुबन्ध के कारण 'डानुबन्धेऽन्त्यस्वरादेर्लोपः' इस नियम से घुण् धातु में 'उण्' का लोप होता है ।

**घोरम्** घुण भ्रमणे (भू.३९९) । घोणते । घुण् +डोर, ड् अनुबन्ध से धातु-घटक 'उण्' का लोप, विभक्तिकार्य, घोरम् । रौद्र । भयानक,

---

1. ति.अनु.- एरः । ति.सूत्रपाठ में 'ओर' पठित है । वृत्ति में 'एर' पाठ के स्थान पर 'ओर' अपेक्षित है ।
2. दीप्तौ म.सं. । चक् धातु धातुपाठ में तृप्ति अर्थ में पठित है । 'दीप्ति' पाठ प्रामादिक है । द्र.- चक तृप्तौ प्रतिघाते च (भू.३३०, भू.५०७) ।
3. घुणघूर्णोर्डोरः । (बं.सं.सू.५/२३९) ।

दारुण । दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् (अ.को.१/७/२०) । घोरं भीमे हरे घोरष्टारे लङ्गतुरङ्गयोः (वि.प्र.को.रान्त.३१) ।

तु.- हन्तेरच् घुर च (वै.सि.कौ.उ.५/७४२) ।

## २३३. सर्वधातुभ्यः ष्ट्रन्[1] ।४-३९।

सर्वेभ्यो धातुभ्यो यथासम्भव ष्ट्रन्प्रत्ययो भवति । षकारो नदाद्यर्थः । निमित्ताभावादृकारः । नकार उच्चारणार्थः । 'भस भर्त्सनदीप्त्योः' बभस्तीति *भस्त्री* कांसादिधमनिश्चर्ममयी । अस्य नदादित्वमाकृतिगणत्वात् । 'धेट पा पाने' पीयतेऽत्र *पात्रं पात्री* वा । 'मा माने' मातीति *मात्रा* उपकरणं स्तोकं वा । 'अम रोगे' अमतीति *अमत्रम्* अन्तर्नाडी गुणश्च । 'वी प्रजनादिषु' वेतीति *वेत्रं* विटपप्रदेशः । 'वश कान्तौ' वष्टीति *उष्ट्रं* करभः । अस्य ष्ट्रन्नन्तस्य सम्प्रसारणं निपातनात् षत्वञ्च ।

सभी धातुओं से यथासम्भव ष्ट्रन् प्रत्यय होता है । ष्ट्रन् में ष् नदाद्यर्थ है, इससे स्त्री. में 'नदाद्यन्चि' (कात.२/४/५०) इत्यादि सूत्र से ई प्रत्यय होता है । निमित्त का अभाव होने से ऋकार पठित है । न् अनुबन्ध उच्चारणार्थ पठित है ।

***भस्त्री*** भस भर्त्सनदीप्त्योः (अ.७५) । दोष लगाना, निन्दा करना, चमकना । बभस्ति । भस्+ष्ट्रन्, (ष्-न् अनुबन्ध का अप्रयोग) स्त्री. की विवक्षा मे 'नदादिगण में भस के पठित होने से 'नदाद्यन्चि' इत्यादि सूत्र से ई प्रत्यय, विभक्तिकार्य, भस्त्री । कांस आदि से निर्मित धौंकनी (अग्नि को तेज करने में हवा देने वाली मशीन) । अथवा जल भरने के लिए चमड़े का पात्र, चमड़े का थैला । लोहकार का उपकरण ।

भस्+त्रन् भस्त्रा, चर्मप्रसेविका (उज्ज्वल.४/१६७) ।

---

1. ष्ट्रन् (ति.अनु.४/३९) ति.अनु. में 'सर्वधातुभ्यः' पद अपठित है किन्तु बङ्ग-संस्करण में पठित है ।

*पात्रम्* पा पाने (भू.२६४) । पीयते अत्र । पा+ष्ट्रन, विभक्तिकार्य, पात्रम् । स्त्री.–पात्री । पात्रञ्च भाजने योग्ये पात्रं तीरद्वयान्तरे । पात्रं स्रुवादौ (वि.प्र.को.रान्त.३५–३६) ।

*मात्रा* मा माने (अ.२६) । माति । मा+ष्ट्रन् (ष्–न् अनुबन्ध का अप्रयोग) । स्त्री. में आ प्रत्यय, विभक्तिकार्य, मात्रा । (नापने का) उपकरण या थोड़ा परिमाण । मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे (वि.प्र.को.रान्त.४१) ।

*अमत्रम्* अम रोगे (चु.१४०) । अमति । अम्+ष्ट्रन्, अमत्रम् । आभ्यन्तर नाडी तथा गुण । पात्र ।

*वेत्रम्* वी प्रजनादिषु (अ.१४) । वेति । वी+ष्ट्रन्, धातुघटक इकार को एकार गुण, विभक्तिकार्य, वेत्रम् । विटपप्रदेश । लताविशेष । बेंत ।

*उष्ट्रम्* वश कान्तौ (अ.३) चाहना । वष्टि । वश्+ष्ट्रन्, निपातन से वकार को उकार सम्प्रसारण तथा शकार को 'छशोश्च' (कात.३/६/६०) से षकार, विभक्तिकार्य, उष्ट्रम् । करभ । ऊँट ।

---

उष्ट्रः[1] (बं.सं.५/२४१) ।

अयं ष्ट्रन्प्रत्ययान्तो निपात्यते । उष्ट्रः ।

बङ्ग–संस्करण में ष्ट्रन् प्रत्ययान्त 'उष्ट्र' शब्द की निपातन से निष्पत्ति निर्दिष्ट है ।

---

1. मद्रास–संस्करण में 'सर्वधातुभ्यः ष्ट्रन्' सूत्र के अन्तर्गत 'उष्ट्र' शब्द की निष्पत्ति की गई है जबकि बङ्ग–संस्करण में 'उष्ट्रः' ऐसा पृथक् सूत्र पठित है । ति.अनु. में भी 'उष्ट्रः' ऐसा पृथक् सूत्रपाठ है ।

२३४. चिमिदिभ्यां त्रक्[1] ।४-४०।

आभ्यां त्रक्प्रत्ययो भवति । ककारो यण्वद्भावार्थस्तेना-गुणत्वम् । 'चिञ् चयने' चिनोतीति *चित्रं* लेख्यम् आश्चर्यं वा । 'ञि मिदा स्नेहने'[2] मिनोति (मेदते) स्नेहयुक्तो भवति इति *मित्रम्* सुहृत् । अघोषेष्वशिटां प्रथमः ।

चि एवं मिद् धातु से त्रक् प्रत्यय होता है । त्रक् में क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है ।

*चित्रम्* चिञ् चयने (सु.५) चुनना, बटोरना । चिनोति । चि+त्रक्, क् अनुबन्ध के कारण यण्वद्भाव होने से चि में इकार को गुण का निषेध, विभक्तिकार्य, चित्रम् । लेख्य या आश्चर्य । चित्रं स्याददद्भुतालेख्यतिलकेषु विहायसि (वि.प्र.को.रान्त.३७) ।

*मित्रम्* ञि मिदा स्नेहने (भू.४७५, दि.७७) । प्रेम या स्नेह करना । मेदते स्नेहयुक्तो भवति (जो स्नेह से युक्त होता है) । मिद्+त्रक्, अघोषेष्वशिटां प्रथमः (कात.३/८/९) इस सूत्र से दकार को तकार, विभक्तिकार्य, मित्त्रम् । सुहृत् । मित्रं सुहृदि मित्रोऽर्के (वि.प्र.को.रान्त.४०) ।

२३५. पूञो ह्रस्वश्च ।४-४१।

अस्मात् त्रक्प्रत्ययो भवति । धातोः ह्रस्वश्च । कोऽगुणार्थः । [पूञ् पवने] पुनातीति *पुत्रः* ।

पू धातु से त्रक् प्रत्यय होता है । धातु को ह्रस्व भी होता है । त्रक् में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है ।

---

1. पाठा.– मिचिभ्यां त्रक् (बं.सं.५/२४२) ।
2. डु मिञ् प्रक्षेपणे (बं.सं.५/२४२) ।

**पुत्रः** पूञ् पवने (क्री.८) । पवित्र करना । पुनाति । पू+त्रक्, धातुघटक ऊकार को ह्रस्व, विभक्तिकार्य, पुत्रः । आत्मज ।

पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः । तस्मात् पुत्र इति ख्यातः स्वयमेव स्वयम्भुवा । इति स्मृतिः (अ.को.-रघु.टी.पृ.३३७-३३८) ।

## २३६. सिर्मनन्तश्च[1] ।४-४२।

'पूञ् पवने' अस्मात् सिप्रत्ययो भवति । अस्य च मन् अन्तश्च । चकाराद् ह्रस्वत्वञ्च । इकार उच्चारणार्थः । पुनातीति *पुमान्* पुरुषः ।

'पूञ् पवने' इस धातु से सि प्रत्यय होता है तथा पूञ् को 'मन्' यह अन्तादेश होता है । 'सि' में इकार उच्चारणार्थ प्रयुक्त है ।

*पुमान्* पूञ् पवने (क्री.८) । पवन=पवित्र करना । पुनाति । पू+सि, प्रकृत सूत्र से 'मन्' अन्तादेश, 'पू मन् स्' 'पू' में ऊ को ह्रस्व, 'सान्तमहतोर्नोपधायाः' (कात.२/२/१८) सूत्र से उपधादीर्घ, संयोगान्त सकार का लोप, विभक्तिकार्य, पुमान् । पुरुष । पातेर्डुमसुन् (वै.सि.कौ.उ.सू.६१७) ।

## २३७. कुटेर्मलः ।४-४३।

अस्मान्मलप्रत्ययो भवति । कुटादित्वाद् अगुणत्वम् । 'कुट कौटिल्ये' कुटति पानीयं कुटिलं भवति इति *कुड्मलम्* । निपातनात् टस्य डत्वम् । ईषद्विकसितम् ।

कुट् धातु से मल प्रत्यय होता है । कुटादिगण के अन्तर्गत पठित होने से 'कुटादेरनिनिचट्सु' (कात.३/५/२७) इस सूत्र से गुण का निषेध होता है ।

---

1. पाठा. पूञो मन्स ह्रस्वश्च, (बं.सं.५/२४४) ।

*कुड्मलम्* कुट कौटिल्ये (तु.८३) । टेढ़ा चलना, टेढ़ा होना । कुटति पानीयं कुटिलं भवति (जिसमें पानी भी टेढ़ा, मेढ़ा सा होता है) । कुट्+मल 'कुटादेरनिनिचट्सु' (कात.३/५/२७) इस सूत्र से धातु को गुण का निषेध, निपातन से ट् को ड्, विभक्तिकार्य, कुड्मलम् । थोड़ा विकसित । अधखिला हुआ । मुकुल (फूलती हुई कली) । कुड्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे (मेदिनी.लान्त.७८) ।

## २३८. व्रश्चेः सक् ।४-४४।

अस्मात् सक्प्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेन 'ग्रहिज्या इत्यादिना सम्प्रसारणम् । 'व्रश्चू छेदने' व्रश्चत्यातपं वृक्षः पादपः ।

व्रश्च् धातु से सक् प्रत्यय होता है । सक् में क् अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । यण्वद्भाव के कारण 'ग्रहिज्यावयिव्यधि' (कात.३/४/२) इत्यादि सूत्र से सम्प्रसारण होता है ।

*वृक्षः* व्रश्चू छेदने (तु.१९) । काटना, छेदना । व्रश्चति आतपम् (जो धूप को नष्ट करता है) । व्रश्च्+सक्, 'वृश्चिमस्जोर्धुटि.' (कात.३/६/३५) से श का लोप । 'चजोः कगौ' (कात.४/६/५६) इत्यादि सूत्र से चकार को ककार, 'रषृवर्णेभ्यो.' (कात.२/४/१८) इत्यादि सूत्र से सकार को षकार, क् एवं ष् के संयोग से क्षकार, 'गृहिज्या' (कात.३/४/२) इत्यादि सूत्र से र् को ऋ सम्प्रसारण, विभक्तिकार्य, वृक्षः । पेड़ । वृक्षो महीरुहः शाखी विटपी पादपस्तरुः (अ.को.२/४/५) ।

## २३९. स्रुवः चिक्[1] ।४-४५।

अस्मात् चिक्प्रत्ययो भवति । इकारोऽनुबन्धः । कोऽगुणार्थः । 'स्रु गतौ' स्रवतीति स्रुक् यज्ञोपकरणम् ।

स्रु धातु से चिक् प्रत्यय होता है । 'चिक्' में इ एवं क् अनुबन्ध अप्रयोगार्ह है । क् अनुबन्ध के होने से यणवद्भाव तथा अगुण होता है ।

**स्रुक्** स्रु गतौ (भू.२७९) । स्रवति । स्रु+चिक् (इ-क् अनुबन्ध) क् अनुबन्ध के कारण धातु को गुण का निषेध, 'चवर्गदृगादीनां च' (कात.२/३/४८) से चकार को गकार तथा 'वा विरामे' (कात.२/३/६२) से गकार को ककार, विभक्तिकार्य, स्रुक् । यज्ञ का उपकरण । यज्ञाग्नि में घी डालने का पात्र (स्रुवा) । स्रुवा द्वयोर्यज्ञपात्रे शल्लकीमूर्व्वयोः स्त्रियाम् (मेदिनी.वान्त.२९) ।

## २४०. चतेर्वारः[2] ।४-४६।

अस्माद् वारप्रत्ययो भवति । अकार उच्चारणार्थः । 'चते चदे याचने' चतन्ति, चतते चत्वारः चतुस्सङ्ख्या ।

चत् धातु से वार प्रत्यय होता है । 'वार' में रकारस्थ अकार उच्चारण- हेतु प्रयुक्त है । 'वार्' अवशिष्ट रहता है ।

1. स्रुवः चिक्, (२३९) तथा इससे आगे क्रमशः चतेर्वारः (२४०) गमेरिनिः (२४१) आङि णिनिः (२४२) भूस्थाभ्यां णिनिः (२४३) परमेष्ठी (२४४) ये सभी सूत्र तिब्बती-अनुवाद में उपर्युक्त क्रम से पठित नहीं हैं । ये सभी सूत्र कृञः पासः (२४७) के बाद ति.अनु. में पठित हैं ।
2. चतेर्वार् (बं.सं.५/२५०) ।

*चत्वारः* चते याचने (भू.५७६) । माँगना । चतते । चत्+वार, अकार अनुबन्ध का अप्रयोग, जस्, विभक्तिकार्य, चत्वारः । चार संख्या ।

## २४१. गमेरिनिः ।४-४७।

अस्मादिनिप्रत्ययो भवति । 'गम्लृ गतौ' गमिष्यतीति[1] *गमी* गन्ता ।

गम् धातु से इनि प्रत्यय भविष्यत् अर्थ में होता है ।

*गमी* गम्लृ गतौ (भू.२७९) । 'भविष्यति गम्यादयः' (कात.४/४/६८) सूत्र से भविष्यत् अर्थ में प्रत्यय । गम्+इनि, उपधादीर्घ, नकारलोप, गमी । गन्ता ।

## २४२. आङि णिनिः ।४-४८।

आङि उपपदे गमेरेव णिनिः प्रत्ययो भवति । णकार इज्वद्भावार्थः । इकार उच्चारणार्थः । 'गम्लृ गतौ' आङ्पूर्वः । आगमिष्यतीति *आगामी* आगन्तुः ।

आङ् के उपपद में रहने पर गम् धातु से ही णिनि प्रत्यय भविष्यत् अर्थ में होता है । णिनि में ण् अनुबन्ध इज्वद्भावार्थ है । 'सिद्धिरिज्वद् ञ्णानुबन्धे' (कात.४/१/१) इत्यादि सूत्र से इज्वद्भाव होता है । इसके कारण उपधादीर्घ, वृद्धि आदि अनेक कार्य होते हैं । णिनि में अन्त्य इकार उच्चारणार्थ प्रयुक्त है । 'इन्' अवशिष्ट रहता है ।

---

1. तिब्बती-अनुवाद में औणादिक शब्दों की व्युत्पत्ति का निर्देश नहीं किया गया है, किन्तु केवल 'गमी' शब्द की 'गमिष्यति' ऐसी व्युत्पत्ति वहाँ निर्दिष्ट है ।

*आगामी* आङ्पूर्वक गम्+णिनि, (भविष्यत् अर्थ में) ण् अनुबन्ध के इज्वद्भाव होने से धातु को उपधादीर्घ, विभक्तिकार्य, आगामी । आगन्तु । आने वाला ।

## २४३. भूस्थाभ्यां णिनिः[1] ।४-४९।

आभ्यां णिनिप्रत्ययो भवति । णकार इज्वद्भावार्थः । भाव इश्च । 'भू सत्तायाम्' भविष्यतीति *भावी* भविष्यन् । 'ष्ठा गतिनिवृत्तौ' स्थास्यतीति *स्थायी* स्थास्यन् ।

भू. एवं स्था धातु से भविष्यत् अर्थ में णिनि प्रत्यय होता है । ण् इज्वद्भावार्थ है । इज्वद्भाव होने से उपधादीर्घ आदि अनेक कार्य हो जाते हैं । इस सूत्र में 'णिनि' पद के ग्रहण में गौरव है । पूर्वसूत्रस्थ णिनि की अनुवृत्ति यहाँ की जा सकती है ।

*भावी* भू सत्तायाम् (भू.१) । सत्ता=होना । भविष्यति । भू+णिनि, ण् अनुबन्ध के कारण इज्वद्भाव होने से धातुघटक ऊकार को औकार वृद्धि, 'औ आव्' (कात.१/२/१५) सूत्र से औ को आव् आदेश=भाविन्, नान्त होने के कारण 'नान्तस्य चोपधायाः' (कात.२/२/१६) सूत्र से उपधादीर्घ, लिङ्गसंज्ञा, सि, सि का लोप, न् का लोप, भावी । होने वाला ।

*स्थायी* ष्ठा गतिनिवृत्तौ (भू.२६७) । रुकना, ठहरना । स्थास्यति । स्था+णिनि, 'आयिरिच्यादन्तानाम्' (कात.३/६/२०) सूत्र से आय् आदेश,

---

1. 'णिनि' का ग्रहण सूत्र में अनावश्यक है । यतः पूर्वसूत्र (४-४८) से णिनि की अनुवृत्ति हो सकती है । अतः पुनः 'णिनि' पद का ग्रहण व्यर्थ है । अत एव बङ्ग संस्करण में 'भूस्थाभ्याञ्च' (बं.सं.५/२५३) ऐसा निर्दिष्ट है । चकार निर्देश घटित ऐसा ही पाठ ति.अनु. में भी पठित है ।

'नान्तस्य चोपधायाः' (कात.२/२/१६) सूत्र से उपधादीर्घ, विभक्तिकार्य, स्थायी ।

## २४४. परमेष्ठी ।४–५०।

अयं णिनिप्रत्ययान्तो निपात्यते । 'ष्ठा गतिनिवृत्तौ' परमपूर्वः । सप्तम्या अलुक् । परमे पदे तिष्ठतीति *परमेष्ठी* । ब्रह्मा ।

'परमेष्ठी' यह णिनि प्रत्ययान्त शब्द निपातन से सिद्ध होता है ।

*परमेष्ठी* परमे पदे तिष्ठति (जो सर्वोच्च पद पर रहता है) । परमपूर्वक । स्था+णिनि, निपातन से आकार का लोप, सकार को षकार, तथा थकार को ठकार, सि प्रत्यय, उपधादीर्घ, सि का लोप, न् का लोप, सप्तमी का अलुक्, परमेष्ठी । ब्रह्मा । परमेष्ठी पितामहः (अ.को.१/१/१६) ।

## २४५. भृवमिकुभ्यः शक् ।४–५१।

एभ्यः शक्प्रत्ययो भवति । ककारः पूर्ववत् । 'डु भृञ्' बिभर्तीति *भृशम्* अत्यर्थम् । 'डु वमु उद्गिरणे' वमति शब्दमिति *वंशः* वेणुः । 'कु शब्दे' कौति पवित्रतामिति *कुशः* दर्भः ।

भृ, वम्, कु इन धातुओं से शक् प्रत्यय होता है । शक् में क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है ।

*भृशम्* डु भृञ् धारणपोषणयोः (अ.८५) । बिभर्ति । भृ+शक्, क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध, विभक्तिकार्य, भृशम् । अत्यर्थ । अत्यधिक ।

*वंशः* डु वमु उद्गिरणे (भू.५५७) । उद्गिरण=कै करना, उगलना । वमति शब्दम् । वम्+शक्, म् को अनुस्वार तथा पञ्चम वर्ण विभक्तिकार्य, वंशः । वेणु । बांस । कुल । वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च (वि.प्र.को.शान्त.१०) ।

*कुशः* कु शब्दे (अ.१०) । शब्द करना । पवित्रतां कौति (जो पवित्रता को कहता है=सूचित करता है) । कु+शक्, कुशः । दर्भ । राम के ज्येष्ठ पुत्र । कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले । कुशो वाच्यवदाख्यातः । (वि.प्र.को.शान्त.२-३) ।

## २४६. कीनाशाङ्कुशौ ।४-५२।

एतौ शक्प्रत्ययान्तौ निपात्येते । 'कित[1] ज्ञाने' चेकेतीति (चिकेतीति) *कीनाशः* यमः[2] । 'अकि लक्षणे' इदनुबन्धत्वान्नागमः । अनुस्वारो वर्गान्तः । अङ्कतीति *अङ्कुशः* करिवारणम् ।

कीनाश, अङ्कुश ये दोनों शक् प्रत्ययान्त शब्द निपातन से सिद्ध होते हैं ।

*कीनाशः* कित ज्ञाने (अ.७६) । जानना । चिकेति । कित्+शक्, निपातन से धातु की उपधा को दीर्घ ईकार, तकार को निपातन से ना-अन्तादेश, विभक्तिकार्य, कीनाशः । यम । यमराज । कीनाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्, यमे ना (मेदिनी.शान्त.१९) ।

क्लिश्+कन, उपधा को ईकार, लकार लोप, नाक् आगम, कीनाशः (वै.सि.कौ.उ.सू.५/७३४) ।

---

1. कि ज्ञाने (पा.धा.जु.११७६) ।
2. 'दरिद्रः' ति.अनु. ।

*अङ्कुशः* अकि लक्षणे (भू.३२६) । चिह्न करना । इदनुबन्ध सहित होने से न् आगम । अङ्कति । अङ्क्+शक्, धातु के अन्त में निपातन से उकार, विभक्तिकार्य, अङ्कुशः । हाथी को अनुशासित करने का अस्त्र । सृणि ।

## २४७. वृतृवदिहनिमनिकस्यशिकषेभ्यः सः ।४–५३।

एभ्यः सप्रत्ययो भवति । 'वृञ् वरणे' वृणोति सर्वं छादयतीति *वर्षम्* मधुपानम् । 'तॄ प्लवनतरणयोः'[1] [तर्षः सूर्यः[2]] । 'वद व्यक्तायां वाचि' मातरमभ्येत्य वदतीति *वत्सः* शकृत्करिः । 'हन हिंसागत्योः' बिस हन्तीति *हंसः* । अथवा चारुगत्या हन्ति गच्छति इति *हंसः* पक्षी । उणादित्वात् क्वचिद् दीर्घत्वमपि दृश्यते । 'मन ज्ञाने' मन्यते सम्भाव्यते शरीरोपचयोऽनेन *मांसं* पिशितम् । 'कसि गतौ'[3] इदनुबन्धत्वान्नागमः । कंसतीति[4] (कंस्ते) *कासः*[5] (कंसः) धातुविशेषः । 'अशू व्याप्तौ'[6] अश्नोतीति *अक्षः* शकटैकदेशः । 'कष निष्कर्षे'[7] (गतौ) कषतीति *कक्षा* प्रसिद्धा ।

वृ, तृ, वद्, हन्, मन्, कसि, अश्, कष् इन सभी धातुओं से स प्रत्यय होता है ।

---

1. 'तॄ प्लवनतरणयोः' यह ति.अनु. में पठित है जब कि म.सं. में अपठित है ।।
2. 'सागरः' ति.अनु. ।
3. 'कमु कान्तौ (बं.सं., ति.अनु.) ।
4. इदनुबन्ध सहित कसि धातु का आदादिक रूप 'कंस्ते' होता है । म.सं. में 'कंसति' रूप असाधु है ।
5. 'कासः' यह भ्रष्ट पाठ है । बं.सं. तथा पा.उ. में 'कंसः' शब्द मिलता है । धातु विशेष 'कांस्य' अर्थ में 'कंसः' पाठ उपलब्ध होता है ।
6. अश भोजने ति.अनु. (क्री.४३) ।
7. कष् हिंसायाम् ति.अनु. (भू.२२४) ।

***वर्षम्*** वृञ् वरणे (सु.८) । वरण करना । वृणोति सर्वं छादयति (जो सब पर छा जाता है) । वृ+स, ऋ को अर्, तथा सकार को षकार, विभक्तिकार्य, वर्षम् । मधुपान । भौरा, मेघादि । वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि, विट् स्त्री व्यापनविष्ठयोः । (मेदिनी.षान्त.२४) ।

***तर्षः*** तॄ प्लवनतरणयोः (भू.२८३) । तरति । तॄ+स, ॠ को अर्, सकार को षकार, विभक्तिकार्य, तर्षः । सूर्य । तर्षो लिप्सापिपासयोः (वि.प्र.को.षान्त.३) । तर्सः प्लवसमुद्रयोः (वै.सि.कौ.उ.३/३४२) ।

***वत्सः*** वद व्यक्तायां वाचि (भू.६१५) । स्पष्ट बोलना । मातरमभ्येत्य वदति (माता के पास पहुँचकर बोलता है) । वद्+स, द् को त्, विभक्तिकार्य, वत्सः । गाय का बछड़ा । शकृत्करिस्तु वत्सः (अ.को.२/९/६२) ।

***हंसः*** हन हिंसागत्योः (अ.४) । मारना, हिंसा करना, जाना । बिसं हन्ति (जो कमल नाल को नष्ट करता है) । हन्+स, नकार को अनुस्वार, विभक्तिकार्य, हंसः । पक्षी ।

अथवा चारुगत्या हन्ति गच्छति (जो सुन्दर गति से जाता है) । हंसः ।

हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मनि मत्सरे । निर्लोभनृपतौ हंसः शारीरमरुदन्तरे । (वि.प्र.को.सान्त.८–९) ।

***मांसम्*** मन ज्ञाने (दि.११३) । मन्यते सम्भाव्यते शरीरोपचयोऽनेन (जिससे शरीर की वृद्धि समझी जाती है) । मन्+स, 'उणादित्वात्' हेतु से उपधादीर्घ, अनुस्वार, विभक्तिकार्य, मांसम् । आमिष । मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियाम् (मेदिनी.सान्त.८) ।

तु.– मनेर्दीर्घश्च मांसम् (वै.सि.कौ.उ.सू.३४४) ।

*कंसः* कसि गतौ (अ.४८) । इदनुबन्ध से न् आगम । कंस्ते । कंस्+स, पूर्व सकार का लोप, विभक्तिकार्य, कंसः । धातुविशेषः (काँसा) कंसो दैत्यान्तरे स्मृतः । कांस्ये च कांस्यपात्रे च मानभेदेऽपि कीर्तितः (वि.प्र.को.सान्त.९) । कंसोऽस्त्री पानभाजनम् (अ.को.२/९/३२) ।

*अक्षः* अशू व्याप्तौ (सु.२२) । व्याप्त होना । अश्नोति । अश्+स, 'छशोश्च' (कात.३/६/६०) सूत्र से शकार को षकार, 'षढोः कः से' (कात.३/८/४) सूत्र से षकार को ककार, ''नामिकरपरः' (कात.२/४/४७) इत्यादि सूत्र से स् को ष्, क्-ष् के संयोग से क्ष्, विभक्तिकार्य, अक्षः[1] । गाड़ी का धुरा ।

*कक्षा* कष गतौ (भू.२२४) । जाना । कषति । कष्+स, 'षढोः कः से' (कात.३/८/४) से षकार को ककार, 'नामिकरपरः प्रत्ययविकारागमस्थः' (कात.२/४/४७) इस नियम से सकार को षकार, क् एवं ष् के संयोग से क्ष्, स्त्री. में आ प्रत्यय, विभक्तिकार्य, कक्षा । प्रसिद्ध ।

कक्षा स्यादन्तरीपस्य पश्चादञ्चलपल्लवे । स्पर्धास्पदे ना दोर्मूले कच्छवीरुत्तृणेषु च । (मेदिनी.षान्त.७–८) । रथभागेऽपि कक्षा स्यात् (वि.प्र.को.क्षान्त.११) ।

---

1. अक्षो ज्ञातार्थशकटव्यवहारेषु पाशके ।
रुद्राक्षेन्द्राक्षयोः सर्पे बिभीतकतरावपि ।
चक्रे कर्षे पुमान् क्लीबं तुत्थे सौवर्चलेन्द्रिये
उषा बाणसुतारात्र्योरुषः कामिनि गुग्गुलौ ॥
रात्रिशेषे उषायान्तु केचिदाहुस्तदव्ययम् । (मेदिनी.क्षान्त.२–३–४) ।

२४८. कृञः पासः[1] ।४-५४।

'डु कृञ् करणे' अस्मात् पासप्रत्ययो भवति । करोति शोभां *कर्पासः* ।

कृ धातु से पास प्रत्यय होता है ।

*कर्पासः* 'डु कृञ् करणे (त.७) । (जो शोभा को बढ़ाता है) । कृ+पास, ऋ को अर् गुण, विभक्तिकार्य, कर्पासः । बादर । कपास, रुई । कन्दकर्पासम् (अ.को.३/५/३५) ।

२४९. वसेः(शेः) कनसिः[2] ।४-५५।

अस्मात् कनसिप्रत्ययो भवति । इकार उच्चारणार्थः । ककारो यण्वत् । तेनागुणत्वम्, सम्प्रसारणञ्च । 'उशनस्' इत्यादिना अन् । 'वश कान्तौ' वष्टि वाञ्छति दानवोदयमिति *उशना* शुक्रः ।

वश् धातु से कनसि प्रत्यय होता है । 'कनसि' में इकार उच्चारणार्थ प्रयुक्त है । ककार यण्वद्भावार्थ है । इससे धातु को गुणनिषेध होता है तथा सम्प्रसारण भी होता है ।

*उशना* वश कान्तौ (अ.३) । चाहना । वष्टि वाञ्छति दानवोदयम् (जो दानवों का उदय चाहता है) । वश्+कनसि, (क्-इ. अनुबन्धों का अप्रयोग) वश्+अनस् वकार को सम्प्रसारण से उकार, उश् अन् अस्, उशनस्', लिङ्गसंज्ञा, सि, 'घुटि चासम्बुद्धौ' (कात.२/२/१७) इस सूत्र से दीर्घ 'उशनःपुरुदंशोऽनेहसां सावनन्तः' (कात.२/२/२२) इस सूत्र से अन्,

---

1. यह सूत्र बङ्ग-संस्करण में संगृहीत नहीं है । तिब्बती-अनुवाद में संगृहीत है ।
2. कनस् (बं.सं.) ।

व्यञ्जनाच्च से सि का लोप तथा लिङ्गान्तनकारस्य से न् का लोप, उशना । शुक्र, शुक्रवार । उशना भार्गवः कविः (अ.को.१/३/२५) ।

## २५०. सर्वधातुभ्योऽसुन्[1] ।४-५६।

सर्वधातुभ्यो यथाभिधानम् असुन्प्रत्ययो भवति । नकारोकारौ उच्चारणार्थौ । 'विध विधाने' विधति सृजति इति *वेधाः* स्रष्टा । 'इण् गतौ' एति सर्वं विकारम् *अयः* लोहम् । 'पीङ् पाने' पीयते *पयः* पानीयम् । 'तप धूप सन्तापे' तपतीति *तपः* धर्मार्जनम् । 'मन ज्ञाने' मन्यते बुध्यते अनेनेति *मनः* अन्तःकरणम् । 'चिती संज्ञाने' चेतति जन आत्मानमिति *चेतः* चित्तम् । 'रह त्यागे' रहति त्यजति संसर्गमिति *रहः* एकान्तम् । 'वी प्रजने' वेति इति *वयः* शरीरावस्था । यथासम्भवं गुणः । अत्वसन्तस्य इति दीर्घत्वम् । 'डु धाञ्' पुरो धीयते *पुरोधाः* पुरोहितः ।

सभी धातुओं से अभिधान के अनुसार असुन् प्रत्यय होता है । 'असुन्' में नकार तथा उकार दोनों अनुबन्ध उच्चारणार्थ प्रयुक्त हैं । 'अस्' मात्र शेष रहता है ।

***वेधाः*** विध विधाने (तु.३८) । विधान करना, रचना करना । विधति । विध्+असुन्, न् एवं उ का अप्रयोग, धातुघटक इकार को एकार, 'अत्वसन्तस्य चाधातोः सौ' (कात.२/२/२०) इस सूत्र से दीर्घ, विभक्तिकार्य, वेधाः । स्रष्टा । ब्रह्मा । विष्णु (बं.सं.) । वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि (मेदिनी.सान्त.४१) ।

---

1. भिक्षु आकाशभद्र (नम् खा. सङ्पो) द्वारा अनूदित 'कलापोणादिसूत्र' में 'असुन्' प्रत्यय निर्दिष्ट नहीं है, किन्तु वज्रध्वज (दोर्जे ग्यलछन) कृत उणादिवृत्ति के तिब्बती अनुवाद में 'असुन्' प्रत्यय पठित है ।

तु.– विदधातीति वेधाः विधा+असि, वेधादेशश्च (वै.सि.कौ.उ.६६४) ।

*अयः* इण् गतौ (अ.१३) । एति सर्वं विकारम् (जो सम्पूर्ण विकार को प्राप्त होता है) । इ+असुन्, धातुघटक इकार को एकार गुण, 'ए अय्' (कात.१/२/१२) सूत्र से अय् आदेश, अयस् की लिङ्गसंज्ञा, विभक्तिकार्य, अयः । लोह ।

*पयः* पीङ् पाने (दि.९०) । पीना । पीयते । पी+असुन् (अस्) ईकार को एकार गुण, 'ए अय' सूत्र से अयादेश, विभक्तिकार्य, पयः । जल । दूध । पयः स्यात् क्षीरनीरयोः (मेदिनी.सान्त.२८) ।

*तपः* तप सन्तापे (भू.१३३) । तपना, तपस्या करना । तपति । तप्+असुन्, तपस् विभक्तिकार्य, तपः । धर्म का संग्रह । चान्द्रायणादि बं.सं. । तपो लोकान्तरेऽपि च (मेदिनी.सान्त.२३) ।

*मनः* मन ज्ञाने (दि.११३) । ज्ञान करना । मन्यते बुध्यते अनेन (जिसके द्वारा जाना जाता है) । मन्+असुन् (अस्) मनस्, विभक्तिकार्य, मनः । अन्तःकरण । हृदय । बुद्धि । मनश्चित्ते मनीषायाम् (मेदिनी.सान्त.३०) ।

*चेतः* चिती संज्ञाने (भू.२) । विचार करना, चिन्तन करना । चेतति जनः आत्मानम् (जो अपने विषय में सोचता है) । चित्+असुन्, धातुघटक इकार को एकार गुण, विभक्तिकार्य, चेतः । चित्त ।

*रहः* रह त्यागे (भू.२४५) । छोड़ना । रहति त्यजति संसर्गम् (जो सङ्ग को छोड़ता है) । रह्+असुन्, रहः । एकान्त । अकेलापन । रहस् तत्त्वे रते गुह्ये रहोऽर्थे च (मेदिनी.सान्त.३१) ।

*वयः* वी प्रजने (अ.१४) । वेति । वी+असुन्, धातुघटक ईकार को एकार गुण, अयादेश, विभक्तिकार्य, वयः । शरीर की अवस्था । वयः पक्षिणि बाल्यादौ यौवने च नपुसकम् (मेदिनी.सान्त.३५) ।

*पुरोधाः* डु धाञ् धारणपोषणयोः (अ.८५) । । पुरो धीयते । पुरस्+धा+असुन्, आकारलोप, सि प्रत्यय, 'अत्वसन्तस्य चाधातोः सौ' (कात.२/२/२०) सूत्र से दीर्घ, पुरोधाः । पुरोहित ।

---

पुरोवयःपयस्सुधाञोऽगुणः[1] । (बं.सं.५–२५७) ।

डु धाञ् *पुरोधाः* पुरोहितः । *वयोधाः* ब्रह्मा । *पयोधाः* समुद्रो मेघश्च ।

पुरस्, वयस्, पयस् पूर्वक धाञ् धातु से असुन्, प्रत्यय होता है ।

*पुरोधाः* पुरस् पूर्वक धा+असुन्, पुरोधाः । पुरोहित ।

*वयोधाः* वयस् धा+असुन्, वयोधाः । ब्रह्मा ।

*पयोधाः* पयस् धा+असुन्, पयोधाः । समुद्र, मेघ ।

---

२५१. चन्द्रे मातेः ।४–५७।

चन्द्रे उपपदे अस्मादसुन्प्रत्ययो भवति । अगुणवद्भावादाकारलोपः । (मा माने) भिन्नयोगः स्पष्टार्थ एव । चन्द्रं मातीति *चन्द्रमाश्चन्द्रः* ।

---

1. यह सूत्र मद्रास–संस्करण में संगृहीत नहीं है । बङ्ग–संस्करण के आधार पर यहाँ दिया गया है । 'पुरसि धाञोऽगुणवत्' ऐसा सूत्र तिब्बती–अनुवाद में प्राप्त होता है । इस तरह इस ग्रन्थ में ति.अनु. एवं बङ्ग–संस्करण के पाठों में पर्याप्त समानता देखने को मिलती है । म.सं. इससे भिन्न है ।

चन्द्र के उपपद में रहने पर मा धातु से असुन् प्रत्यय होता है । इसमें अगुण की पूर्वसूत्र से अनुवृत्ति करनी पड़ेगी, तभी असुन् को अगुणवद्भाव करके धातुघटक आकार का लोप हो सकता है ।

*चन्द्रमाः* चन्द्रं माति । चन्द्र+मा+असुन्, धातुघटक आकार का 'आलोपोऽसार्वधातुके' (कात.३/४/२७) सूत्र से लोप, विभक्तिकार्य, चन्द्रमाः । चन्द्र । चन्द्रं रजतममृतं च, तदिव मीयतेऽसौ चन्द्रमाः इति हरदत्तः (वै.सि.कौ.तत्त्व.बो.उ.६७७) ।

## २५२. अनेहसोऽप्सरसोऽङ्गिरसः ।४-५८।

एते असुन्प्रत्ययान्ता निपात्यन्ते । 'ईह चेष्टायाम्' नञ्पूर्वः । न ईहते चेष्टते *अनेहा* कालः । 'सृ गतौ' अप्पूर्वः । अप्सरन्तीति *अप्सरसः* देवयोषितः[1] । 'गॄ निगरणे' गिरतीति *अङ्गिराः* । निपातनादपूर्वः । अनुस्वारो वर्गान्तः इरादेशश्च । मुनिविशेषः ।

अनेहस् अप्सरस् तथा अङ्गिरस् ये सभी असुन् प्रत्ययान्त शब्द निपातन से निष्पन्न होते हैं ।

*अनेहा* ईह चेष्टायाम् (भू.४४६) । चेष्टा करना, प्रयत्न करना । नञ् पूर्वक प्रयोग । न ईहते । नञ् पूर्वक ईह्+असुन्, निपातन से नञ् के पूर्व अकारागम, अन् ईह्+अस्, अनेहस्, लिङ्गसंज्ञा, सि प्रत्यय, 'उशनः पुरुदंशोऽनेहसां0' से अन् अन्तादेश, 'घुटि चासंबुद्धौ' (कात.२/२/१७) से दीर्घ 'व्यञ्जनाच्च' से सिलोप तथा 'लिङ्गान्तनकारस्य' से नलोप, अनेहा । काल ।

1. देवयोनिविशेषः (बं.सं.) । देवपत्नी (ति.अनु.) ।

***अप्सरसः*** सृ गतौ भू.२७४) । अप्सु सरन्ति । अप् सृ+असुन्, ऋ को अर्, अप्सरस्, बहु.–अप्सरसः । देवों की सामान्य स्त्रियाँ । विशेष देवयोनि ।

***अङ्गिराः*** गॄ निगरणे (तु.२२) । निगलना, खाना । गिरति । अम् पूर्वक । गॄ+असुन्, 'ॠदन्तस्येरगुणे' (कात.३/५/४२) से गॄ में ॠ को इरादेश, म् को अनुस्वार, तथा पञ्चम वर्ण, विभक्तिकार्य, अङ्गिराः । मुनिविशेष । ऋषिभेद ।

## २५३. उषिरञ्जिशॄभ्यो यण्वत् ।४–५९।

एभ्योऽसुन्प्रत्ययो भवति स च यण्वत् । तेनागुणत्वम् अनुषङ्गलोपः । ॠदन्तस्येरगुणे । 'उष दाहे' तनु उषति[1] दहति इति *उषा*[2] अहर्मुखम् । 'रञ्ज रागे' रक्षत्यनेनेति (रज्यतेऽनेनेति) रजः धूलिः । 'शॄ सृ हिंसायाम्' शीर्यते हिंस्यते *शिरः* मूर्धा ।

उष्,. रञ्ज्, शॄ इन धातुओं से असुन् प्रत्यय होता है । असुन् को यण्वद्भाव भी होता है । यण्वद्भाव होने से गुणनिषेध होता है । 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) इस सूत्र से अनुषङ्गसंज्ञक नकार का लोप होता है । 'ॠदन्तस्येरगुणे' (कात.३/५/४२) इस सूत्र से ॠदन्त धातु को अगुण प्रत्यय पर में रहने पर 'इर्' होता है ।

***उषः*** उष दाहे (भू.२२९) । जलाना । ओषति । तनु ओषति (जो अंशतः या अल्प ही सन्ताप देता है) । उष्+असुन्, असुन् को यण्वद्भाव होने से धातुघटक उकार को गुण का निषेध, लिङ्गसंज्ञा, सि,

---

1. उष दाहे (भू.२२९) इस धातु के भौवादिक होने से 'ओषति' रूप होता है । अतः उषति पाठ चिन्त्य है ।
2. उषस् का प्रभात अर्थ में 'उषः' तथा रात्रि अर्थ में उषा रूप होता है । प्रभात अर्थ के अनुसार वृत्ति में 'उषः' पाठ अपेक्षित है ।

स् का विसर्ग उषः । अहर्मुख । प्रातःकाल । सूर्य (ति.अनु.) उषस् प्रत्यूषसि (मेदिनी.सान्त.१९) ।

*रजः* रञ्ज रागे (भू.६०५) । रंगना । रज्यते अनेन । रञ्ज्+असुन्, 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) सूत्र से अनुषङ्गसंज्ञक नकार का लोप, विभक्तिकार्य, रजः । धूलि । रजस् क्लीबं गुणान्तरे । आर्तवे च परागे च रेणुमात्रे च दृश्यते (मेदिनी.सान्त.३१–३२) ।

*शिरः* शॄ हिंसायाम् (क्री.१५) । नष्ट करना । शीर्यते । शॄ+असुन्, 'ॠदन्तस्येरगुणे' (कात.३/५/४२) सूत्र से ॠ को इर् आदेश, 'शिरस्' विभक्तिकार्य, शिरः । मूर्धा । शिरस् प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च (मेदिनी.सान्त.४१) ।

## २५४. यजेः शिश्च ।४–६०।

अस्मादसुन्प्रत्ययो भवति । स च यण्वत् । जस्य शिरादेशः । इकार उच्चारणार्थः । 'यज देवपूजासङ्गतिकरण-दानेषु' इज्यते[1] *यशः* कीर्तिः ।

यज् धातु से असुन् प्रत्यय होता है । असुन् को यण्वद्भाव होता है । यज् में ज् के स्थान में शि आदेश होता है ।

*यशः* यज देवपूजासङ्गतिकरणदानेषु (भू.६०८) । यज्ञ करना, हवन करना, देवपूजा करना, अर्पण करना, सङ्गति करना । यज्यते । यज्+असुन्, ज् को शि आदेश, इ अनुबन्ध का अप्रयोग, यशस्, विभक्तिकार्य, यशः । कीर्ति ।

---

1. यज्यते म.सं. । य् को इ सम्प्रसारण होने से इज्यते पाठ किया गया है ।

## २५५. उषेर्जश्च ।४-६१।

अस्मादसुन्प्रत्ययो भवति । अस्य जकारोऽन्तस्य । अकार उच्चारणार्थः । 'उष दाहे' उषतीति (ओषतीति) *ओजः* । बलम् ।

उष् धातु से असुन् प्रत्यय होता है । धातु को ज अन्तादेश भी होता है । जकार में अन्त्य अकार उच्चारणार्थ प्रयुक्त है ।

***ओजः*** उष दाहे (भू.२२९) । जलाना । ओषति । उष्+असुन्, ष् को ज् अन्तादेश, धातुघटक उकार को ओकार गुण, विभक्तिकार्य, ओजः । बल । प्रकाश । ओजस् दीप्तावववष्टम्भे प्रकाशबलयोरपि (मेदिनी.सान्त.२०) ।

## २५६. वाचः(वचेः) सोऽन्तश्च ।४-६२।

अस्मादसुन्प्रत्ययो भवति, सोऽन्तश्च । अकार उच्चारणार्थः । चवर्गस्य किः । नामि इत्यादिना षत्वम् । 'वच परिभाषणे' वक्ति वाणीमिति *वक्षः* भुजमध्यम् ।

वच् धातु से असुन् प्रत्यय तथा स अन्तादेश होता है । स में अकार उच्चारणार्थ प्रयुक्त है ।

***वक्षः*** वच परिभाषणे (अ.३०) । कहना, बोलना । वक्ति वाणीमिति (जो वाणी को कहता है) । वच्+असुन्, स अन्तादेश, 'वच् स् अस्' 'चवर्गस्य किरसवर्णे' (कात.३/६/५५) इस सूत्र से चकार को ककार, 'नामिकरपरः प्रत्ययविकारागमस्थः सिः षं नुविसर्जनीयषान्तरोऽपि' (कात.२/४/४७) इस सूत्र से सकार को षकार, क्-ष् के संयोग से क्ष्, विभक्तिकार्य, वक्षः । भुजाओं के बीच का भाग । छाती । वक्षोऽलङ्करणे हेमपात्रे हेमपलेऽपि च (मेदिनी.कान्त.२८) ।

## २५७. स्रुरि(री)भ्यां तोऽन्तश्च ।४-६३।

आभ्यामसुन्प्रत्ययो भवति, अनयोस्तोऽन्तश्च । शु स्रु दु द्रु (गतौ) स्रवति जलं स्रोतः प्रवाहः । 'रि (री) रेषणे च'[1] (रीङ् स्रवणे) रीयते स्रवते (स्रवति) योनौ रेतः शुक्लम्[2] । (शुक्रम्) ।

स्रु, री, इन दोनों धातुओं से असुन् प्रत्यय होता है, तथा इन दोनों धातुओं को त अन्तादेश भी होता है ।

*स्रोतः* स्रु गतौ (भू.२७९) । स्रवति जलम् (जिसमें जल बहता है) । स्रु+असुन्, स्रु को त् अन्तादेश, स्रु में उकार को ओकार गुण, 'स्रोतस्' विभक्तिकार्य, स्रोतः । प्रवाह । स्रोतोऽम्बुवेग इन्द्रिये (मेदिनी.सान्त.४६) ।

*रेतः* री रेषणे च (क्री.८) । स्रवित होना, चूना, पीड़ित होना । रीयते स्रवते (जो योनि में स्रवित होता है) । री+असुन्, त् अन्तादेश, ईकार को एकार, रेतस्, विभक्तिकार्य, रेतः । शुक्र । वीर्य । शुक्ल । रेतस् शुक्रे पारदे च (मेदिनी.सान्त.३३) ।

## २५८. शीङः फोऽन्तश्च ।४-६४।

अस्मादसुन्प्रत्ययो भवति फोऽन्तश्च । अकार उच्चारणार्थः । 'शीङ् स्वप्ने' शेते योनौ शेफः मेढ्रम् ।

---

1. वृत्ति में उल्लिखित 'री रेषणे' धातु के क्र्यादिगणीय होने से 'रीयते' व्युत्पत्ति असङ्गत है । 'रीङ् स्रवणे' इस दिवादिगणीय आत्मने पद धातु से 'रीयते' व्युत्पत्ति की सङ्गति हो जाती है । अतः वृत्ति में 'रीङ् स्रवणे' (दि.८६) ऐसा धातुपाठ अपेक्षित है ।
2. रेतः का अर्थ वृत्ति में 'शुक्लम्' ऐसा निर्दिष्ट है । शुक्लम् के स्थान पर 'शुक्रम्' पाठ शुद्ध होगा ।

शीङ् धातु से असुन् प्रत्यय होता है तथा धातु को फ अन्तादेश होता है । 'फ' में अकार उच्चारणार्थ है । 'फ्' प्रयुक्त होता है ।

**शेफः** शीङ् स्वप्ने (अ.५५) । सोना, नींद लेना । योनौ शेते (जो योनि में सोता है) । शी+असुन्, 'शी' को फ् अन्तादेश, शी–घटक ईकार को एकार गुण, विभक्तिकार्य, शेफः । मेढ्र । लिङ्ग । योनि । गुह्य । शेपः लिङ्गेन्द्रियं वा (दया.उ.को.४/२०२) । शिश्नः मेढ्रो मेहनशेफसी (अ.को.२/६/४६) ।

## २५९. छादेर्नश्च[1] ।४–६५।

अस्मादसुन्प्रत्ययो भवति धातोश्छस्य नोऽन्तश्च । 'छद षधृ' चौरादित्वादिन् । अस्योपधाया दीर्घः । उणादित्वात् ह्रस्वत्वम् । छादयति पापं छन्दः वेदः ।

छद् धातु से असुन् प्रत्यय तथा धातुघटक छ को न् अन्तादेश होता है । धातु के चौरादिक होने से 'इन्' प्रत्यय तथा उणादित्वात् इस हेतु से धातु को ह्रस्व होता है । 'अस्योपधाया दीर्घो वृद्धिर्नामिनामिनिचट्सु' (कात.३/६/५) सूत्र से उपधा को दीर्घ होता है ।

**छन्दः** छद अपवारणे (चु.२३) । अपवारण=ढँकना, समाप्त करना । 'चुरादेश्च' (कात.३/२/११) सूत्र से इन् । 'अस्योपधाया' सूत्र से धातु की उपधा को दीर्घ, छादि+असुन्, छ् को न् अन्तादेश, उणादित्वात्' हेतु से धातु को ह्रस्व, 'छन्दस्', विभक्तिकार्य, छन्दः । वेद । पद्य । छन्दस् पद्ये च वेदे च स्वैराचाराभिलाषयोः (मेदिनी.सान्त.२२) । छन्दो वशेऽप्यभिप्राये हृदाख्याचित्तबुक्कयोः (वि.प्र.को.४/२२०) ।

---

1. छादेर्नश्च दात्पूर्वः (बं.सं.५–२६६) छदेर्नादीर्घश्च (ति.अनु.) ।

चन्देरादेश्च छः, छन्दः (वै.सि.कौ.उ.सू.४/६५८) ।

२६०. अमेर्भोऽन्तश्च[1] ।४-६६।

अस्मादसुन्प्रत्ययो भवति भोऽन्तश्च । अकार उच्चारणार्थः 'अम रोगे' अमति स्वादुत्वं गच्छति इति *अम्भः* पानीयम् ।

अम् धातु से असुन् प्रत्यय होता है तथा धातु को 'भ' अन्तादेश होता है । भ में अकार उच्चारणार्थ प्रयुक्त है ।

*अम्भः* अम रोगे (चु.१४०, भू.१६०-गत्यर्थः) । अमति स्वादुत्वं गच्छति (जो स्वाद को प्राप्त होता है) अम्+असुन्, भ् अन्तादेश, अम्भस्, विभक्तिकार्य, अम्भः । पानीय । जल । अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बु-शम्बरम् (अ.को.१-१०-४) ।

तु.- उदके नुम्भौ च, अम्भः (वै.सि.कौ.उ.४/६४९) ।

२६१. अर्तेरुश्च ।४-६७।

अस्मादसुन्प्रत्ययो भवति । अस्य च उकारादेशो भवति । (ऋ गतौ) अर्यते गम्यते उरः वक्षः ।

ऋ धातु से असुन् प्रत्यय तथा ऋ को उकारादेश होता है ।

---

1. कलापोणादि का बङ्ग संस्करण इसी सूत्र के बाद समाप्त है । देवनागरी-बङ्ग-संस्करण में 5 पाद एवं २६३ सूत्र हैं । बङ्ग-संस्करण में मद्रास-संस्करण में ६ पाद एवं ३९९ सूत्र हैं । बङ्ग-संस्करण में चतुर्थ पाद के अन्तिम ४ सूत्र तथा पञ्चम पाद के ६७ सूत्र एवं षष्ठ पाद के ६८ सूत्र इस तरह कुल १३९ सूत्र (म.सं. के) उपलब्ध नहीं होते । तिब्बती-अनुवाद में इस पाद के अन्तिम ४ सूत्र तो अनूदित हैं, किन्तु उसमें भी पञ्चम एवं षष्ठ पाद (म.सं.) के सभी १३५ सूत्र अनुपलब्ध हैं ।

उरः ऋ गतौ (अ.७४) । ऋ+असुन्, ऋ को उर् आदेश, 'उरस्' विभक्तिकार्य, उरः । वक्ष । हृदय । उरः श्रेष्ठे च वक्षसि (वि.प्र.को.सान्त.३६) ।

तु.– अर्तेरुच्च (वै.सि.कौ.उ.४/६३४) ।

## २६२. कृतेः स्नक् ।४–६८।

अस्मात् स्नक्प्रत्ययो भवति । ककारो यण्वद्भावार्थः । तेनागुणत्वम् । 'कृती छेदने' कृन्तति वेष्टयति व्याप्नोति इति कृत्स्नं सम्पूर्णम् ।

कृत् धातु से स्नक् प्रत्यय होता है । स्नक् में क् अनुबन्ध यण्वद्भावार्थ है, जिससे गुण का निषेध होता है ।

*कृत्स्नम्* कृती छेदने (तु.१२) । काटना, छेदना । कृन्तति वेष्टयति । कृत्+स्नक्, क् अनुबन्ध से यण्वद्भाव के कारण धातु को गुण का निषेध, विभक्तिकार्य, कृत्स्नम् । विश्व । संसार । सम्पूर्ण । कृत्स्नं कष्टे समस्ते च (वि.प्र.को.नान्त.१२) । विश्वमशेषं कृत्स्नम् (अ.को.३/१/६५) ।

तु.– कृत्यशूभ्यां क्स्नः (वै.सि.कौ.उ.३/२९७) ।

## २६३. श्लिषेरितोऽच्च ।४–६९।

अस्मात् स्नक्प्रत्ययो भवति । अस्येकारस्याद् भवति । 'श्लिष आलिङ्गने' श्लिष्यते *श्लक्ष्णं* सुन्दरम् । 'षढोः कः से' निमित्ताण्णत्वं रषृवर्णेभ्यो णम् ।

श्लिष् धातु से स्नक् प्रत्यय होता है । 'श्लिष्' में इकार के स्थान में अकार होता है । क् अनुबन्ध यण्वद्भावार्थ है ।

*श्लक्ष्णम्* शिलष आलिङ्गने (दि.२९) । आलिङ्गन करना । श्लिष्यते । श्लिष्+स्नक्, श्लिष् में इकार के स्थान में अकार, श्लष्+स्न, 'षढोः कः से' (कात.३/८/४) सूत्र से ष् को क्, स् को ष्, क्-ष् के संयोग से क्ष्, 'रषृवर्णेभ्यो णम्' (कात.२/४/१८) सूत्र से नकार को णकार, विभक्तिकार्य, श्लक्ष्णम् । सुन्दर । सुकुमार । सूक्ष्म ।

तु.- श्लिषेरच्चोपधायाः (दया.उ.को.३/१९) ।

२६४. तिजेर्दीर्घश्च[1] ।४-७०।

अस्मात् स्नक्प्रत्ययो भवति । अस्य च इकारो दीर्घो भवति । 'चजोः कगौ' चस्य गत्वम् । अघोषेषु कत्वं षत्वं णत्वञ्च । 'तिज निशाने क्षमायां च' तितिक्षते सर्वं सहते तीक्ष्णं खरम् ।

(इति दौर्गसिंह्या(सिम्ह्या)मुणादिवृत्तौ चतुर्थः पादः)

तिज् धातु से स्नक् प्रत्यय होता है तथा तिज् घटक इकार को दीर्घ होता है । 'चजोः कगौ धुड्घानुबन्धयोः' (कात.४/६/५६) इस सूत्र से जकार को गकार होता है । अघोषेष्वशिटां प्रथमः (कात.३/८/९) इस सूत्र से गकार को ककार होता है ।

---

1. तिजेरितश्च ति.अनु.४-२६७
भिक्षु आकाशभद्र (नम् ख. सङ्पो) द्वारा कृत कलापोणादि सूत्र का तिब्बती-अनुवाद इसी सूत्र तक प्राप्त है । प्रायः इतना ही अंश बङ्ग-संस्करण में भी प्राप्त होता है । मद्रास-संस्करण में इससे १३५ सूत्र अधिक निर्दिष्ट है, जिनका अनुवाद बं.सं. एवं ति.अनु. में प्राप्त नहीं होता । ति.अनु. की न्यूनता को देखकर उन १३५ सूत्रों का अनुवाद मद्रास-संस्करण के आधार पर संस्कृत से तिब्बती भाषा में कर दिया गया है । जो ति.अनु. वाले खण्ड में द्रष्टव्य है ।

*तीक्ष्णम्* तिज निशाने क्षमायां च (भू.३४८) । तीक्ष्ण करना, पैना करना, चमकाना । तितिक्षते सर्वं सहते (जो सब कुछ सहन करता है) । तिज्+स्नक्, तिज् में इकार को दीर्घ ईकार, 'चजोः कगौ धुड्घानुबन्धयोः' (कात.४/६/५६) इस सूत्र से जकार को गकार, 'अघोषेष्वशिटां प्रथमः' (कात.३/८/९) इस सूत्र से गकार को ककार, स्नक् में स् को ष्, क्-ष् संयोग से क्ष्, 'रषृवर्णेभ्यो णम्' (कात.२/४/१८) सूत्र से नकार को णकार, विभक्तिकार्य, तीक्ष्णम् । खर ।

तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । यवाग्रजे पुंसि तिग्मात्मत्यागिनोस्त्रिषु ॥ (मेदिनी.णान्त.१५) ।

(श्रीदुर्गसिंह कृत उणादिवृत्ति के चतुर्थ पाद की हिन्दी टीका समाप्त)

## ॥अथ पञ्चमः पादः[1]॥

शब्दात्मिका या त्रिजगद् बिभर्ति
स्फुरद् विचित्रार्थसुधां स्रवन्ती ।
या ऋद्धिरी (ड्या हृदये सदैव)
मुखे च सा मे वशमस्तु नित्यम्[2] ॥

स्फुरित होने वाले विचित्र अर्थामृत का क्षरण करती हुई जो शब्दरूपिणी (वह) तीनों लोकों को धारण करती है । जो ऋद्धिरूपिणी स्तुत्य है, वह सदैव मेरे हृदय तथा मुख में विराजमान हो ।

उणादिविषये प्रसिद्धं पञ्चमं पादं प्रकाशयन्नाह–

उणादि के सभी पादों में सर्वाधिक प्रसिद्ध पञ्चम पाद है । पाणिनि या शाकटायन प्रोक्त पञ्चपादी उणादिसूत्र प्राप्त होते हैं । कात.व्या. में षट्पादी उणादिसूत्र प्राप्त हैं । इनमें षष्ठ पाद अधिक है । पञ्चम पाद में प्रकीर्ण एवं प्रसिद्ध शब्द व्युत्पादित हैं । इसीलिए वृत्तिकार ने 'पञ्चमं पादं प्रकाशयन्नाह' ऐसा कहा है ।

---

1. कात.व्या. में उणादि के जो तीन संस्करण प्राप्त हैं, उनमें पाद–संख्या एवं सूत्र–संख्या में पर्याप्त वैषम्य है । बङ्ग–संस्करण में ५ पाद, २६३ सूत्र हैं । तिब्बती में भिक्षु (नम्–खा सङ्पो) आकाशभद्र द्वारा अनूदित ४ पाद एवं २६७ सूत्र हैं । मद्रास से प्रकाशित इस देवनागरी–संस्करण में ६ पाद, ३९९ सूत्र हैं ।
2. मद्रास–संस्करण में उक्त पद्य अपूर्ण है । उसमें ऋद्धिरी.................... मुखे च इस प्रकार अपूर्ण पठित है । गुरुपद हालदार के 'व्याकरणदर्शनेर इतिहास' ग्रन्थ में उपर्युक्त पद्य पूर्णतया पठित है । वहाँ प्राप्त 'ऋद्धिरीड्या हृदये सदैव' इस अंश से पूर्ति की गई है । (द्र.–कात.व्या.वि. पृ०२०) ।

## २६५. अभावीशेः कुः ।५-१।

अभावुपपदे ईशेः कुप्रत्ययो भवति । 'ईश ऐश्वर्ये' अभिपूर्वः । अभीष्टे तमो नाशयति *अभीषुः* रश्मिः ।

'अभि' के उपपद में रहने पर ईश् धातु से कु प्रत्यय होता है । 'कु' प्रत्ययस्थ क् अनुबन्ध के यण्वद्भावार्थ होने से धातु को गुण का निषेध होता है ।

*अभीषुः* ईश ऐश्वर्ये (अ.४४) । ऐश्वर्य=समृद्धियुक्त होना, शक्तिशाली होना । अभीष्टे तमो नाशयति (जो अन्धकार को नष्ट करता है) । अभि ईश्+कु, क् अनुबन्ध से यण्वद्भाव होने के कारण धातु को गुण का निषेध, सवर्णदीर्घ 'धातुविभक्तिवर्जमर्थवल्लिङ्गम्' (कात.२/१/१) इस सूत्र से लिङ्गसञ्ज्ञा, सि, 'रेफसोर्विसर्जनीयः' (कात.२/३/६३) इस सूत्र से स् का विसर्ग, अभीषुः । रश्मि । किरण । घोड़े की लगाम । अभीषुः प्रग्रहे रश्मौ (अ.को.३/३/२१९) । अभिषुः प्रग्रहे रश्मौ (मेदिनी.षान्त.३०) ।

## २६६. वौ धाञश्च ।५-२।

वावुपपदे दधातेः कुः प्रत्ययो भवति । 'डु धाञ्' विपूर्वः । विदधात्यमृतमिति *विधुः* चन्द्रः । कोऽनुबन्धो यण्वदर्थः । तेनानुषङ्गलोपः । असार्वधातुक[1] इति ।

'वि' के उपपद में रहने पर धा धातु से कु प्रत्यय होता है । यहाँ वि- उपसर्ग- पूर्वक धा धातु का प्रयोग है । कु में क्- अनुबन्ध यण्वद्भावार्थ प्रयुक्त है । इससे गुण का निषेध तथा 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) इस सूत्र से अनुषङ्गलोप होता है ।

---

1. आलोपोऽसार्वधातुके (कात.३/४/२७) ।

*विधुः* डु धाञ् धारणपोषणयोः (अ.८५) । विदधाति अमृतम् (जो अमृत को धारण करता है) । वि (पूर्वक) धा+कु क् अनुबन्ध से यण्वद्भाव होने से धातु को गुण का निषेध, 'आलोपोऽसार्वधातुके' (कात.३/४/२७) इस सूत्र से धातुघटक आकार का लोप, विभक्तिकार्य, विधुः । चन्द्रमा । वायु, अग्नि । विधुः शशाङ्के कर्पूरे हृषीकेशेऽपि राक्षसे (वि.प्र.को.धान्त.१२) ।

तु.– विरहिणं विध्यति विधुः (वै.सि.कौ.उ.सू.१–२३) ।

## २६७. दंशेः कनिः ।५–३।

दंशेः कनिप्रत्ययो भवति । कानुबन्धत्वादनुषङ्गलोपः । 'दंश दशने' दंशतीति दश सङ्ख्या ।

दंश् धातु से कनि प्रत्यय होता है । कनि में इकार उच्चारणार्थ प्रयुक्त है । क् अनुबन्ध से धातुस्थ अनुषङ्गसंज्ञक नकार का 'अनिदनुबन्धानामगुणेऽनुषङ्गलोपः' (कात.३/६/१) इस सूत्र से लोप होता है ।

*दश* दंश दशने (भू.२९०) । काटना, डसना । दंशति । दंश्+कनि (=अन्) क् अनुबन्ध के कारण 'के यण्वच्च योक्तवर्जम्' (कात.४/१/७) इस सूत्र से यण्वद्भाव होने से 'अनिदनुबन्धाना.' इस पूर्वोक्त सूत्र से अनुषङ्गसंज्ञक नकार का लोप, विभक्तिकार्य, दश । १० संख्या ।

## २६८. मङ्घेर्नलुगवन्तश्च ।५–४।

मङ्घेः कनिप्रत्ययो भवति नलुगवन्तश्च । 'मङ्घि कैतवे च' इदनुबन्धत्वान्नागमः । मङ्घत इति *मघवा* इन्द्रः ।

मङ्घ् धातु से कनि प्रत्यय होता है । मङ्घ् में नलोप तथा 'अव्' अन्तादेश होता है । मघि में इकार अनुबन्ध होने से न् आगम होता है ।

***मघवा*** मघि कैतवे च (भ.३३४) । जाना, दोष लगाना, ठगना, जुआ खेलना । इदनुबन्ध के कारण न् आगम । मङ्घ्+कनि, (अन् शेष) क्–इ, अनुबन्धों का अप्रयोग, प्रकृत सूत्र से नकार का लोप तथा 'अव्' अन्तादेश 'मघ् अव् अन्' लिङ्गसंज्ञा, सि, 'नान्तस्य चोपधायाः' (कात.२/२/१६) इस सूत्र से उपधादीर्घ, सिलोप, नलोप, मघवा । इन्द्र ।

तु.– मह पूजायाम् । हस्य घो वुगागमश्च मघवा (वै.सि.कौ.उ.सू.१–१५७) ।

## २६९. सहेः षष् कनेर्लुक् च ।५–५।

सहेः कनिः प्रत्ययो भवति, सहेः षषादेशश्च । कनेर्लुग्भवति । 'षह मर्षणे' 'धात्वादेः षः सः' सहत इति षट् ।

सह् धातु से कनि प्रत्यय होता है तथा सह् को षष् आदेश होता है । कनि प्रत्यय का प्रकृत सूत्र से लोप भी होता है ।

***षट्*** षह मर्षणे (भू.५६०) । सहना, सहन करना । धात्वादेः षः सः (कात.३/८/२४) इस सूत्र से ष् को स् । सहते । सह्+कनि, सह् के स्थान में षष् आदेश तथा कनि प्रत्यय का लुक्, लिङ्गसंज्ञा, जस् प्रत्यय, जस् का लुक्, डकार को टकार, विभक्तिकार्य, षट् । ६ संख्या ।

## २७०. बृंहेः क्मानच्च हात्पूर्वः ।५–६।

बृंहेः क्मान्प्रत्ययो भवति । अच्च हकारात्पूर्वः । 'बृह बृहि वृद्धौ' इदनुबन्धत्वान्नागमः । बृंहति व्रतानि इति *ब्रह्मा* ।

